प्रकाशक —

वेदमन्दिर, काँकरिया रोड, अहमदाबाद

स्वर्गीय भाई फूलशङ्कर सुन्दरलाल देसाई ऐडवोकेट द्वारा वेदमन्दिर प्रकाशन विभाग में वेद तथा दर्शन सम्बन्धी प्रकाशन के लिये संस्थापित ट्रस्ट की ओर से उन्हीं की पुण्य-स्मृति में प्रकाशित।



यह पुस्तक प्रकाशक और प्रणेता के पास से मिल सकेगी।



मुद्रक,

श्री देवदत्त शास्त्री विद्याभास्कर,
विश्वेश्वरानन्द वैदिक रिसर्च इन्स्टीट्यूट प्रैस,
साधु आश्रम, होशियारपुर (भा पंजाब)



वेद मन्दिर काकरीया रोड–अहमदाबाद स्थापना ई स १९४९

ॐ

# उपोद्घातः

अथ को विद्वांश्चेद् विजानाति—"पदार्थ प्रतिपादनाय वैशेषिकं, प्रमाणैरर्थ परीक्षणाय च न्याय शास्त्रं प्रवृत्तम्" इति। पदार्थं प्रतिपादनाय महामान्यो मुनि कणादः सूत्राणि प्रणिनाय, तदेतद् वैशेषिकं दर्शनमुच्यते, विशेष तु नाम विशिष्ट पदार्थं प्रतिपादयति यत, सेयं काणादी पदार्थ-विद्या। प्रमाणैरर्थानां परीक्षणं प्राधान्येनाधिकृत्य प्रवृत्तस्तत्रभवान् गौतमो मुनिर्न्यायसूत्राणि विरचयाञ्चकार, सेयं गौतमी न्यायविद्या=विचारशास्त्रम्। प्रशस्तपाद-शङ्करमिश्र-चन्द्रकान्त भट्टादिभि कृत व्याख्यान वैशेषिक, वात्स्यायन भारद्वाज वाचस्पतिमिश्रादिभिराचार्य प्रवरै विवृतार्थ न्यायदर्शन च भारतीय दर्शनेषु प्राधुर्यं भजमानमास्ते।

उभय चैतत् सम्मिलितं साम्प्रतं न्यायशास्त्रमुच्यते तर्कशास्त्र वा। पाणिनीयमिव च सर्वशास्त्रोपकारकमिदम्, तथा चायमाभाणको लौकिकानाम्—"काणाद पाणिनीयं च सर्वशास्त्रोपकारकम्" इति। मिथिलाया प्रादुर्भूय वङ्गेषु (नवद्वीपे) प्रचुर प्रचारमापद्यत न्यायशास्त्रम्, मध्यकाले च (शाकार्थयुगे—विक्रमस्य दशम शतकादुत्तरोत्तरम्) तत्रत्याचार्य प्रवरैः प्रौढतामापाद्यमानमिदं क्रमेण श्री जगदीश-गदाधर-भट्टादिभिरवच्छेदकतावच्छिन्नत्वात्मक परिष्कार परिपाटीं लम्भितं नव्यन्यायतां प्रापत्।

अनन्तर च सुकुमार मतीनां कृते कठिनं दुष्प्रवेशं चेदमाकलय्य राजीव नाम शिष्य निमित्तीकृत्य दया-परवशो वङ्गवासी (नवद्वीपीयः) महाविद्वान् विश्वनाथ पञ्चानन भट्टाचार्यः

खिष्टीय-सप्तदश-शतकस्य पूर्वार्धे ( १६३० तमे वर्षे ) "कारिकावली" तद्व्याख्यान-भूतां "न्याय-सिद्धान्तमुक्तावली" च निर्ममे, येन तदात्वे न्यायशास्त्र-प्रवेशः सुकरोऽजायत। अथ तस्यैव खीष्ट शतकस्योत्तरार्ध-भागे तैलङ्ग ब्राह्मणो विद्वत्तल्लजोऽन्नंभट्टस्तर्कसङ्ग्रहाभिधमतिसङ्क्षिप्त-सरलं लघु-ग्रन्थं न्यायशास्त्र-प्रासादे प्रविविक्षूणां कृते प्रथम सोपान-रूपं प्रणीतवान्।

अथ प्रायः सर्वत्र भारते प्रथम-परीक्षासु तर्कसङ्ग्रहो, मध्यम-परीक्षासु च न्याय-सिद्धान्त-मुक्तावली पाठ्यत्वेन नियतीकृता पाठ्यते, किन्तु "मुक्तावली" शास्त्रार्थ-युगस्य प्रतिनिधिः प्रवेश-ग्रन्थ इत्यपत्ये जटिलतामेव धत्ते। पूर्वोत्तर-व्याप्ति-परिष्कारे पक्षतायां हेत्वाभास-लक्षणेऽन्यथाख्यातौ प्रवृत्ति-जनकतादि-निरूपणेऽन्यत्र चापि द्रव्यत्वादि-जाति सिद्ध्यादौ व्यामुह्यन्तोऽद्यतना विद्यार्थिनस्ततो विरज्यन्ते पराजयन्ते चाध्ययनात्। एवं परम-योग्योऽपि मुक्तावली-ग्रन्थः साम्प्रतं यदि न्याय-वैशेषिकदर्शन-प्रासादप्रवेशे मध्यम-सोपान रूपतां नावहति केवलं तदीया जटिलतैव तत्र हेतुः, या तस्यां तादृश-काले निर्मितायां स्वाभाविकी एव।

ततश्च वर्तमानकाले तादृशः कश्चित् सरलतरो ग्रन्थः स्याद् यो न्याय-वैशेषिकदर्शन-प्रासादे प्रवेष्टु-कामानां मध्यम-सोपान रूपतां याथार्थ्येन वहेदिति गम्भीरं विमृश्य मयाऽयम् "कणादगौतमीय-पदार्थानुशासनं" नाम नातिसङ्क्षिप्तो नापि जटिलः सुकुमारमति-विद्यार्थिजन-हितावहः सद्ग्रन्थो निबद्धः।

अत्र हि न्यायस्य वैशेषिक-शास्त्रस्य च विषयः सरलैः सरलतरैश्च दार्शनिकैरेव शब्दैरुपसङ्गृहीतः, क्रमश्च तर्क-सङ्ग्रहीय एवाश्रितोऽतिसङ्क्षेपश्च पराकृतः। प्रथमं वैशेषिकाभिमता सप्तपदार्था क्रमश उद्दिष्टा लक्षिता परीक्षिता चेति

दार्शनिकीमेव शैलीमनुसृत्य विवेचितं सर्वम् । प्रतिपदार्थ-निरूपणं च न केवलं वैशेषिकमेव समाश्रितं किन्तु तत्तद्विषयको न्याय-दर्शनीयोऽपि विशेषस्तत्र तत्र समालम्बितः । न्यायदर्शनं हि वाद-प्रधानं विचारशास्त्रमस्तीति वादोपयोगितया प्रकारान्तरेण पदार्थान् षोडशधा विभज्य प्रतिपादयति, ततस्तत्प्रधानं विद्यार्थिनो मा बाधिष्टेति षोडशापि पदार्था अन्ते निरूपिताः, यत्र सर्वोऽपि न्यायदर्शनस्य प्रथमाध्याय-गतो विषयः स्पष्टं प्रति-फलितो भासते । अन्तर्भाविता चान्ते षोडश-पदार्थीयं सप्त-पदार्थ्याम् ।

## मदीयो विश्वासः

अधीत्य चेमं सद्ग्रन्थं विद्यार्थी न्यायवैशेषिक-दर्शनयोर्नाणुमात्रमपि प्रवेशे क्लेशमनुभविष्यतीति मे दृढो विश्वासः । न्याय-वैशेषिकयोर्व्युत्पन्नश्चान्यत्र सर्वत्र दर्शनेष्वप्रतिहत-गतिर्भवत्येवेति न परोक्षं कस्यापि विदुषः । तथा चायं ग्रन्थो दर्शन-शास्त्र-प्रवेशाय तर्कसङ्ग्रहोत्तरं पठ्यमानः पाठ्यमानश्च परमोपयोगी भवितुमर्हति ।

आशासे च मदीयं प्रयत्नमिमम् अवश्य सफलयिष्यन्ति मान्या विद्वांसः स्नेहास्पदीभूता विद्यार्थिनश्च प्रेमोपहारमिमं सदयमात्मीयतामुपनयन्तः । तेनासादितोत्साहश्चाऽहं दर्शन-प्रवेशिकाया द्वितीयभागं "कापिल-पातञ्जलं" तृतीयभागं "जैमिनीय-वैयासिकं" चापि लेखितुं यथासमय प्रवर्त्तेय ।

## धन्यवादः

पूर्णतां गतस्यापि पुस्तकस्याऽस्य वर्षद्वयं व्यत्यगात्, शीघ्रं प्रकाशनमिच्छतोऽपि निर्धनस्य मे विवशतैव बाधकतामावहत् प्रकाशने । अथ श्रीस्वामि-निगमानन्द-शास्त्रि-प्रेरणया अहमदा-

धामस्थ-वेदमन्दिर-प्रकाशन विभागः कार्यमिदं स्वहस्तेऽकरोत्। स्वर्गीय-श्रीफूलशङ्कर-सुन्दरलाल-देसाई महोदयद्वारा वेदमन्दिराधिकारे एव वेद-दर्शन-सम्बन्धि प्रकाशनाय संस्थापित ट्रस्ट-स्वीकृत द्रव्य-व्ययेनास्य प्रकाशनं सम्पादयच्च। तदेते वेद-मन्दिर-प्रकाशन-विभागाधिकारिणः ट्रस्ट-सदस्याः प्रेरक महाभागास्त्वति सर्वेऽपि सहस्रशो धन्यवादानर्हन्ति। अहं च तेषां भूयसीं कृतज्ञतामावहामि।

किञ्च येषां सौजन्येन पुस्तकमिदम् एतादृश-शुद्ध सुसंस्कृत रूपे धर्मोत्तमाऽऽकार-प्रकारे च मुद्रणमलभत, तेषां श्री विश्वेश्वरानन्द वैदिक-शोध-संस्थान मुद्रणालयाध्यक्षाणां श्री देवदत्तशास्त्रि-विद्याभास्कराणाम् इतरेषां च तत्रत्य-कार्य-वाहकानामप्यहं शतशो धन्यवादान् ब्रुवे।

## क्षमा-प्रार्थना

समाचरितेऽपि महति प्रयत्ने काश्चित्परिगणिता किन्तु सामान्यतरा अशुद्धयोऽवशिष्टा एवेति शुद्धिपत्रानुसारं संशोध्य पठन-पाठनमनुसन्धान. क्षमां याचे।

अथात्र पुस्तकेऽनुभूयमानाः त्रुटीः पूरयितुं विदुषां सम्मतयः परामर्शाश्च सबहुमानं सधन्यवादं च स्वीकरिष्यन्ते, द्वितीय-संस्करणे च यथायोगमाश्रयिष्यन्ते।

श्री सरस्वती-संस्कृत-महाविद्यालयः
खन्ना जि. लुधियाना
(पू. पंजाब)
१०-५-१९५३.

भवदीयो
विश्वनाथः

# विनीत-निवेदनम्

क्वाहं मन्दमतिः क्वेदं गम्भीरं तत्त्व-दर्शनम् ।
तथापि साहसं कर्तुमुद्यतो महदाश्रयात्[1] ॥१॥
काणादे गौतमीये च शास्त्रे दर्शनाह्वये ।
तत्त्व-जिज्ञासु-बालानां प्रवेशः सुलभो भवेत् ॥२॥
एतदर्थं तु यत्नोऽयं मयका समनुष्ठितः ।
शाब्दे दार्शनिकैरेव सरले बाल बोधने ॥३॥
मुक्तावली तु जटिला सङ्क्षिप्तस्तर्क-सङ्ग्रहः ।
( अयंतु )
न सङ्क्षिप्तो न जटिलः सरलः सार-संग्रहः ॥४॥
अर्थतः शब्दतो वापि सरलीकृत्य वा क्वचित् ।
पूर्वाचार्य-वचांस्येव निबद्धान्यत्र यत्नतः ॥५॥
प्रीतये तदिदं भूयात् सत्पदार्थानुशासनम् ।
कणादगौतमीयं तु छात्राणां विदुषां तथा ॥६॥

निवेदको विश्वनाथ

---

१. महतः=ईश्वरस्य, महता=पूर्वाचार्याणां च ।

# विषयानुक्रमणिका


| विषयः | पृष्ठम् | विषयः | पृष्ठम् |
|---|---|---|---|
| ग्रन्थोपक्रमः | १ | आत्मनानात्वम् | २३ |
| पदार्थोद्देशः | २ | क्षणिकविज्ञानात्मवादः | २४ |
| शक्ति-सादृश्ये | ३ | नित्यविज्ञानात्मवादः | २५ |
| द्रव्याणि, तमश्च | ,, | साङ्ख्यमतनिरासः | २६ |
| गुणोद्देश. कर्माणि | ४ | मनो-निरूपणम् | २७ |
| सामान्यं जातिर्वा | ५ | गुण-निरूपणारम्भः | २८ |
| जातिबाधकाः विशेषाश्च | ६ | रूप-निरूपणम् | २९ |
| समवाय निरूपणम् | ७ | रस निरूपणम् | ३० |
| अभाव निरूपणम् | ८ | गन्ध-स्पर्शौ सङ्ख्याः | ३१ |
| त्रिधा प्रवृत्तिः शास्त्रस्य | १० | परिमाण-निरूपणम् | ३२ |
| पृथिवी, अवयवि-सिद्धिः | ११ | पृथक्त्व निरूपणम् | ३३ |
| परमाणु-सिद्धि. | १३ | संयोग-विभागौ | ३४ |
| पृथिवी-भेदाः, जलं च | १४ | परत्वापरत्वे गुरुत्व द्रवत्वे | ३५ |
| जलं, तेजो-निरूपणञ्च | १५ | स्नेहः, शब्दनिरूपण च | ३६ |
| सुवर्णस्य तैजसत्वसिद्धिः | १६ | बुद्धि-निरूपणारम्भः स्मृतिश्च | ३७ |
| वायु निरूपणम् | १७ | स्वप्न निरूपणम् | ३८ |
| आकाश निरूपणम् | १८ | अप्रमा-प्रमानिरूपणम् | ३९ |
| काल', दिशश्च, | १९ | प्रमाण भेदाः, कारणं त्रिधा | ४० |
| आत्मनिरूपणारम्भः | २० | प्रत्यक्ष-लक्षणं भेदाश्च | ४१ |
| इन्द्रियाणां शरीरस्य चात्मत्व-निरासः | २१ | प्रत्यक्षे महत्वं हेतु' | ४२ |
| आत्मनित्यत्वम् | २२ | षड्विधः सन्निकर्षः | ४३ |
| | | अनुमिति स्वरूपम्... | ४४ |

| विषयः | पृष्ठम् |
|---|---|
| पञ्चावयवाः | ४५ |
| व्याप्ति-निरूपणम् | ४६ |
| व्याप्ति-भेदौ अनुमान-भेदाः | ४७ |
| सपक्ष-विपक्षादि, सद्धेतुश्च | ४८ |
| हेत्वाभासाः | ४९ |
| उपाधि-निरूपणम् | ५० |
| उपमिति-निरूपणम् | ५१ |
| शाब्दी प्रमा | ५२ |
| शक्तिग्रहणोपायाः | ५३ |
| जातिविशिष्टे शक्तिः | ५४ |
| पद-चातुर्विध्यम् | ५५ |
| लक्षणा-निरूपणम् | ५६ |
| शाब्दबोधे कारणानि | ५८ |
| सुखं दुःखम् इच्छा च | ५९ |
| द्वेषः कृतिश्च | ६० |
| धर्माऽधर्मौ संस्कारश्च | ६१ |
| भावनाख्यः संस्कारः | ६२ |
| गौतमी न्यायविद्या | ६२ |
| षोडश पदार्थ-विवेचनम् | ६३ |
| सप्तपदार्थ्यामन्तर्भावः | ६३ |
| पुस्तकसमाप्तौ पुष्पिका | |

# शुद्धि-पत्रम्

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| -थाधिका | -थाधिक्ता | ६ | ४. |
| -याधकानां | -याधकानां | ,, | ,, |
| भूतस्य | भूतत्व | ,, | १०. |
| -प्रत्ययेहतुः | -प्रत्यय हेतु | ७. | ४. |
| -वहुत्वा- | -वहुत्वा- | १३. | ६ |
| जात | जातं | १४. | १६. |
| सासिद्धिक | सांसिद्धिकं | १५. | ७. |
| स्वक | स्वक् | १८. | १५. |
| -कारणा | -कारणं | १८. | १६. |
| द्रव्य | द्रव्यं | १६. | ५. |
| घटविपय | घटविपर्य | २४. | १०. |
| -पृथक्त्व | -पृथक्त्वं | २८. | ११. |
| -मुत्कट | -मुत्कटं | ३० | १४. |
| -मनुत्कट | -मनुत्कटं | ३०. | १४. |
| एकोऽय | एकोऽयं | ३१. | १५. |
| सयोग. | सयोग' | ३४. | १. |
| -पादक- | -पादक | ४५. | १४. |
| प्रतिबन्धक | प्रतिबन्धकं | ४६. | २१. |
| वृत्तिलक्षणा | वृत्ति लक्षणा | ५६. | १४ |
| लक्षणा वीजम् | लक्षणा वीजम् | ,, | १८. |

ॐ

(कणादगौतमीयम्)

# * पदार्थानुशासनम् *

अथ पदार्थानुशासनम् ।

अथ शब्दोऽधिकारार्थः । आरम्भणमधिकारः । पदार्थानुशासनं नाम सप्तपदार्थी विद्या आरभ्यते । श्रुत्या मङ्गलार्थश्चायमथशब्दः । निर्विघ्नग्रन्थसमाप्तये तदिदं मङ्गलम्, तथैव शिष्टाचारात् ।

सुखं दुःखनिवृत्तिश्च पुरुषार्थौ । तद्धेतुत्वात् सुखोपायो दुःखनिवृत्त्युपायश्च । आत्यन्तिकी दुःखनिवृत्तिर्मोक्षः परमपुरुषार्थः, तदेतन्निःश्रेयसमित्युच्यते ।

---

॥ ॐ नमः श्रीपरमात्मने ॥

१. श्रुत्या=श्रवणेन । भोजनार्थं नीयमान उदकुम्भो यथा दर्शनेन पान्थस्य ग्रामार्थं प्रगमस्य । अथ शब्दस्य माङ्गलिकत्वे चैव स्मृतिः —

"ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥"

२ शिष्टानामेष आचारः "सर्वकर्मादौ निर्विघ्नसम्पूर्णतायै मङ्गलं कुर्वते" इति । फलादौ तत्साधनभावे च भ्रान्तिरहिताः शिष्टाः ।

३. अर्थ्यते अभिलष्यते इत्यर्थः, पुरुषस्य अर्थः पुरुषार्थः पुरुषाभिलाषविषयः । स च सुखं दुःखनिवृत्तिश्चैव, सर्वः सुखमिच्छति दुःखाच्चोद्विजते यतः ।

४. पुरुषार्थं इति शेषः ।

५. आत्यन्तिकी दुःखनिवृत्तिः=सर्वथा सर्वदापि सर्वदुःखानामभावः ।

६. निश्चितं श्रेयः=कल्याणं निःश्रेयसम् (अचतुर-विचतुरेत्यादौ अच्-प्रत्ययान्तो निपातः) । निःशेषं श्रेयो निःश्रेयसम् इति वा ।

अर्थकामौ अभ्युदयः । "यतोऽभ्युदय-निःश्रेयससिद्धिः स धर्मः" । तदिदं धर्मोऽर्थः कामो मोक्षश्चेति पुरुषार्थ-चतुष्टयम् । तत्सिद्धिश्च पदार्थानां तत्त्वज्ञानेनैवेति पदार्थाः प्रतिपाद्यन्ते—

द्रव्य-गुण-कर्माणि सामान्य-विशेषौ समवायोऽ-
भावश्चेति सप्त पदार्थाः ।

अभिधेयत्वं प्रमेयत्वं वा पदार्थत्वम् । नास्ति जगति तत् किञ्चित् यन्न स्यादभिधाविषयः प्रमाविषयो वा । सर्वेश्वरादि-प्रमाविषयतया अभिधाविषयतायाश्च सर्वत्र विद्यमानतया न क्वापि दोषः । अन्यत्र पदार्थानां भावाऽभावतया विभागेऽपि नात्र यथोपन्यासः, सप्तमस्याऽभावतया निर्देशेनैव तत्सिद्धेः । "सप्तमोऽब्राह्मण" इत्युक्ते षड् ब्राह्मणा इतिवत् । इमे च पदार्था सत्येव ।

---

१. यस्मादभ्युदयस्य = अर्थकामात्मकस्य लौकिकस्यैश्वर्यस्य पारलौकिकस्य वा स्वर्गादेरैश्वर्यस्य, तथा निःश्रेयसस्य = आत्यन्तिकदुःखनिवृत्तिरूपस्य मोक्षस्य सिद्धिः प्राप्तिर्भवति स धर्म इत्यर्थः । ततो धर्मोऽपि पुरुषार्थः सुखप्राप्तिदुःखनिवृत्त्योरुपायरूपत्वात् ।

२. नाविज्ञाय पदार्थानां तत्त्वं तेभ्यस्तदुपयोगेनार्थः कामो वा साधयितुं शक्यते, न चापि धर्मः । मोक्षस्यापि आत्मानात्मज्ञानरूपस्य तत्त्वभूत-पदार्थानां तत्त्वतो ज्ञानेनैव सम्भवात् ।

३. अभिधेयत्वम् = अभिधाविषयत्वम् । प्रमेयत्वं = प्रमाविषयत्वम् ।

४. आदिशब्देन सर्वज्ञा योगिनो गृह्यन्ते ।

५. सत्याभिरूप. ।

६. अन्यत्र = जैनादिदर्शने, षण्णां भावानां कथनं सप्तमस्य चाभावस्य प्रतियोगिनिरूपणाधीनतया पृथगनुपन्यासस्य सूत्रान्तरे प्रबन्धे कृतम् ।

न च शक्तिरतिरिक्तः पदार्थस्तस्याः शक्तिमत्येवान्तर्भावात्। न हि वह्नेरतिरिक्ता दाहशक्तिर्नाम कश्चित् पदार्थः। वह्निरेव दाहकारणम्। चन्द्रकान्तमणिसमवधाने तु तस्य[1] तत्प्रतिबन्धकतया न भवति दाहः। अत एव मण्यभावे भवत्येव दाहः। प्रतिबन्धकाभावस्यापि सर्वत्र कार्ये कारणभावात्।

न चापि सादृश्यं पदार्थान्तरम्, चन्द्र इव मुखमित्यत्र मुखे चन्द्रभेदघटितचन्द्रगताह्लादजनकत्वं च चन्द्रसादृश्यम्।[2] तत्र भेदोऽन्योन्याभावः, आह्लादः सुखविशेषः, तज्जनकत्वं तज्जनिकर्तृत्वं, कर्तृत्वं च कर्तृनिष्ठो धर्मः कृतिः, कृतिश्च यत्नो गुण एव।

**तत्र द्रव्याणि पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मनश्चेति नवैव।**

गुणाश्रयः कर्माश्रयश्च द्रव्यम्। तमोऽपि दशमं द्रव्यं स्यात्। तद्धि नीलरूपवदिति गुणाश्रयः। चलतक्रियावदिति कर्माश्रयः। भवति हि प्रतीतिः "नीलं तमश्चलति" इति। तच्च गन्धशून्यतया न पृथिवी, नीलरूपवत्तया न जलं तेजो वा। रूपवत्तया च न वायुराकाशं दिगात्मा मनो वा, तेषु रूपाभावात्। तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणम्। यथा च—

"तमः खलु चलं नीलं परापरविभागवत्।
प्रसिद्ध-द्रव्य-वैधर्म्यान्नवभ्यो[3] भेत्तुमर्हति"॥

१ तस्य = चन्द्रकान्तमणेः, दाहप्रतिबन्धकतया।

२. यद्यपि चन्द्रगताऽऽह्लादजनकत्वं चन्द्रस्यैव। नहि यथा चन्द्रं दृष्ट्वा आह्लादो जायते [illegible] एव मुखं दृष्ट्वा जायते, तथापि चन्द्रगताह्लादजातीयाह्लादजनकत्वं मुखेऽस्त्येव, चन्द्रं दृष्ट्वा य आह्लादो जायते तज्जातीयः स आह्लादो यो मुखं दृष्ट्वा जायते इत्यर्थः।

३. प्रसिद्धानि यानि नव द्रव्याणि तेभ्यो विरुद्धधर्मत्वात्।

अत्रोच्यते—सर्वसाधारण्-प्रत्यक्षावगतोष्णस्पर्शादीनामाश्रयतया तेजो द्रव्यं सर्वसम्मतं नापोढुं शक्यते। तमश्चेद् तेजोऽभावरूपमेव। न द्रव्यान्तरम्। रूपवत्ता प्रतीतिर्नीलं तम इतिवद् भ्रान्ता। कर्मवत्ताप्रतीतिश्च तथा। नहि तमश्चलति। आलोके चलति तमश्चलनप्रतीतिर्भ्रम एव। मत्सिद्धमेतत्—

"आलोकाभाव एवेति तमो द्रव्यं न तु स्वयम्।
नील-क्रियाप्रतीतिस्तु भ्रान्तिरेवेति मन्यताम्॥"

द्रव्याश्रिता गुणास्ते च—

रूप-रस-गन्ध-स्पर्शाः सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभागाः परत्वाऽपरत्वे गुरुत्व-द्रवत्वे स्नेहः शब्दो बुद्धिः सुख-दुःखे इच्छा-द्वेषौ प्रयत्नो धर्माधर्मौ संस्कारश्चेति चतुर्विंशतिर्गुणाः।

उद्देशक्रमप्राप्तं कर्म, तल्लक्षणमुच्यते—

उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं गमनमिति पञ्च कर्माणि।

चलनात्मकं कर्म। ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणं कन्दुकादेः। अधोदेशसंयोगहेतुरपक्षेपणं लोष्टादेः। सन्निकृष्टसंयोगहेतुराकुञ्चनं पादादेश्चर्मादेर्वा। विप्रकृष्टसंयोगहेतुः प्रसारणं वस्त्रादेर्धान्यादेर्वा। अन्यत्सर्वं गमनम्। प्रवेशनिष्क्रमणादयो भ्रमणादयश्च सर्वे गमने एवान्तर्भवन्ति इति न पृथग्गुणाः। एकस्मिन्नेव कर्मणि गृहाद् गृहान्तरं गच्छति पुरुषे कस्यचिद् द्रष्टुः प्रविशतीति प्रत्ययोऽपरस्य निष्क्रामतीति। अयघट्टनाच्चक्रादौ तिर्यक्संयोगानुकूलं गमनं भ्रमणम्। वेगपूर्वकं मलादेरधोगमनं रेचनम्।

१. देहगेहकर्म तदन्वेषणमित्यर्थः। एवमग्रेऽपि।

वह्न्यादेरूर्ध्वगमनं चोर्ध्वज्वलनम्। जलादेः पर्वतादि-सप्रवाहा-भिर्गमनं स्यन्दनम्। वाय्वादेस्तिर्यग्गमनं च गमनतया प्रसिद्धमेवेति सर्वमन्यद् गमनं स्पष्टमेव। भ्रमणादौ गमनव्यवहारो मुख्यः। उत्क्षेपणादौ च भाक्त[1] इति सम्भवत्यपि गमनान्तर्भावे पृथगेवोक्तानि उत्क्षेपणादीनि। गतिर्गमनमित्यनन्तभेदभिन्नं क्रियामात्रं तदेवेति। उत्क्षेपणादिभेदप्रतिपादनं तु केवलं शिष्यबुद्धिवैशद्यार्थं प्रपञ्चः। कर्म क्रिया चलनं गमनमिति च पर्यायाः।

## समानानां भावः सामान्यं—जातिः।

नित्यमेकमनेकसमवेतं सामान्यम्। अनेकसमवेतोऽपि संयोगादिर्न नित्यः। गगनपरिमाणं नित्यमपि नानेकसमवेतम्। समवेतं समवायेन वृत्ति। नित्योऽनेकवृत्तिरपि अत्यन्ताभावो न समवेतः। सामान्यमेव नित्यम् अनेक-समवेतं चेति निर्दुष्टं लक्षणमिदं नित्यमेकमनेकसमवेतं सामान्यमिति।

## परमपरं चेति द्विविधं सामान्यम्।

तत्र द्रव्यादि-त्रिकवृत्तिः सत्ता परं सामान्यम्। अपरं द्रव्यत्वादि। अथ का सत्ता?, द्रव्यादिषु त्रिष्वपि सत्सदिति यतः प्रत्ययः, सदिदं सदिदमित्याकारकः शब्दप्रयोगो वा यदधीनः सा सत्ता परं सामान्यं महाविषयत्वात्। अनुवृत्तेरेव तस्याः परत्वम्[2]। द्रव्यादित्रिकेऽनुवृत्तैव सा। सत्ताभिन्नं द्रव्यत्वादिकम् अननुवृत्तेरपरं सामान्यम्। उभयथाऽप्यपेक्षया

१ भाक्तः=गौणः। इति हेतोरेव। यस्मादुत्क्षेपणादौ मुख्यतया गमनव्यवहारो न भवति, अत एव तेषां पृथक्कर्मत्वं प्रतिपादितम्।

२. परम्=अधिकदेशवृत्ति। अपरम्=अल्पदेशवृत्ति।

३. परम् अपरं च द्रव्यत्वादिकमित्यर्थः।

द्रव्यत्वादि। पृथिवीत्वाद्यपेक्षया अधिकदेशानुवृत्तेर्द्रव्यत्वादेः परत्वम्। सत्तापेक्षया चाल्पदेशानुवृत्तेरपरत्वमपि। घटत्वादेश्चापरत्वमेव। सामान्यत्वं न जातिः, अनवस्थितेः। [2]अनवस्थितिर्जातिबाधिका। अथमशाम्नि जातिबाधकानां सङ्ग्रहः—

"व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः॥"

व्यक्तेरभेदो व्यक्त्येकत्वम्। तत आकाशत्वं न जातिः[1]। तुल्यव्यक्तिकत्वाद् घटत्वं कलशत्वं च न जातिद्वयम्। भूतत्वं मूर्तत्वं च न जातिः सङ्करात्। परस्परात्यन्ताभावसमानाधिकरणयोरेकत्र समावेशः सङ्करः। पृथिवी-जल-तेजो-वाय्वाकाशानि भूतानि। पृथिवी-जल-तेजो-वायु-मनांसि मूर्तानि। आकाशे मूर्तत्वं नास्ति भूतत्वमस्ति। मनसि च भूतत्वं नास्ति मूर्तत्वमस्ति। सह समावेशश्चोभयोः पृथिव्यादि-चतुष्टये। सामान्यत्वं न जातिः अनवस्थितेः। सामान्ये सामान्यस्वीकारे तत्रापि तत्रापीति अनवस्था स्यात्। रूपहानेर्विशेषत्वं न जातिः। तस्य जातित्वे स्वतो व्यावर्तकत्वं विशेषस्य स्वरूपं हीयेत। असम्बन्धः सम्बन्धाभावस्ततो न समवायत्वम् अभावत्वं वा जातिः। समवाये समवायान्तरस्याऽभावात्, अभावे च समवायाभावात्। आकाशत्वादिकम् उपाधिस्तु[3] स्यादेव।

अन्त्या नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः, अनन्ताश्च ते।

---

१. सदपि च तस्याऽनुवृत्तित्वादेव।

२. अनवस्थितिरनवस्था अव्यवस्थेत्यर्थः।

३. जातिभिन्नधर्मः उपाधिः।

विनाशारम्भरहितेष्वाकाशादिषु परमाणुषु च प्रतिद्रव्यम् एकैकशो वर्तमाना अत्यन्त-व्यावृत्ति-बुद्धिहेतवोऽन्त्या विशेषाः। अतुल्याकृतिष्वनित्येषु घटपटादिषु घटत्व-पटत्वादिकं जाति-र्व्यावृत्तिप्रत्ययहेतुः। क्वचिद् गुणः, क्रिया च क्वचित्। क्वचिदा-वयवभेद एव व्यावर्तकः। यथा "अयं घटोऽमुष्माद् घटाद् भिन्नो-ऽवयवभेदात्" इति अवयवकपालानामवयवभेदो व्यावर्तकः। किन्तु नित्येषु तुल्याकृतिषु परमाणुषु योगिनां यो भिन्नता-प्रत्ययस्तत्रावयवाभावान्नावयवभेदो व्यावर्तको भवितुमर्हति। विशेष एव तत्र व्यावर्त्तकः "परमाणुरयम् अमुष्मात्परमाणो-र्भिद्यते विशेषादिति। स्वस्य च स स्वत एव व्यावर्तक इति न तत्र विशेषान्तरापेक्षा। परमाणुरन्त्यः पदार्थः। तस्यापि व्यावर्तको विशेष इति सर्वान्त्या विशेषाः। प्रत्याश्रयमेकैकशो वर्तन्ते इति अनन्ता विशेषाः।

अयुतसिद्धानाम् आधाराधेयभूतानां यः सम्बन्धः स समवायः। स चैको नित्यश्च।

असम्बद्धयोरविद्यमानता अयुतसिद्धिः। यथा अवयवावय-विनोः, गुणगुणिनोः, क्रियाक्रियावतोः, जाति-व्यक्त्योः, विशेष-नित्यद्रव्ययोः। एतेषु इहेदमिति बुद्धिर्यतो भवति स समवायः। यथा 'इह कुण्डे बदराणि' इति प्रत्ययो नासमवाये हेतुः। तथा

1. "व्यावृत्तिबुद्धिः" = भिन्नताप्रत्ययः।
2. श्वेतनीलरक्तादयो, श्वेतो नीलो वा गुणः।
3. निष्क्रमणप्रवेशादौ गमनागमनादिर्वा क्रिया।
4. कुण्डबदरयोः संयोगः सम्बन्धः।

इह तन्तुषु पटः, घटे रूपम्, गवि क्रिया, द्रव्ये द्रव्यत्वम्, परमाणुषु विशेषा इत्यादिप्रत्यया अपि न सम्बन्धमन्तरा भवितुमर्हन्ति. इत्यस्ति कश्चित्सम्बन्धः, न चासौ संयोगः, युतसिद्धानामेव संयोगात्। अप्राप्तयोः प्राप्तिः संयोगो न चात्र तथा। नापि स्वरूपसम्बन्धोऽनन्तस्वरूपाणां सम्बन्धकल्पने गौरवात्। सोऽयं समवाय एव स चैकः। न चैकत्वे स्पर्शसमवायो रूपसमवायश्चैक एवेति वायौ स्पर्शसमवायसत्त्वे रूपसमवायस्यापि सत्त्वाद् वायौ रूपवत्ताप्रतीतिः स्यादिति वाच्यम्। वायौ रूपसमवायसत्त्वेऽपि तस्य रूपप्रतियोगिकत्वाऽभावात्। 'वायौ रूपम्' इति रूपाधारता प्रत्ययस्याभावादिति तात्पर्यम्।

ननु इह भूतले घटाभाव इत्याधाराधेयभाव प्रतीतेरभावस्यापि सम्बन्धान्तरं सिद्ध्येदिति चेन्न, तत्र स्वरूपसम्बन्धस्य सत्त्वान्न सम्बन्धान्तरावश्यकता, तत्तत्कालीनतद्भूतलादिकमेवाभावानां सम्बन्ध।

## उक्ताः षड् भावपदार्थाः सप्तमोऽभावः।

न भावोऽभावः। स चतुर्धा प्रागभावः प्रध्वंसाभावोऽन्योन्याभावोऽत्यन्ताभावश्चेति। अनादिः सान्तः प्रागभाव, उत्पत्तेः पूर्वं कार्यस्याभावः, उत्पत्स्यमाने घटे घटो नास्तीति। सादिरनन्तः प्रध्वंसाभावः, उत्पन्नस्य घटादेर्मुद्गरादिना ध्वंसे घटो ध्वस्तो नष्ट इति वा। तादात्म्येनाभावोऽन्योन्याभावः,

---

१. अवयवेषु अवयवीत्यर्थः।

२. गुणिनि गुणः।

३. क्रियावति क्रिया।

४. व्यक्तौ जातिः।

५. नित्यद्रव्ये विशेषः।

६. पृथक्सिद्धानामित्यर्थः।

७. रूपं वायौ नास्तीति प्रत्ययविषयम्। समवायश्च तत्र स्पर्शप्रतियोगिकत्वेनाऽस्ति, न रूपप्रतियोगिकत्वेन।

घटो न तादात्म्येन पटः, पटश्च न तादात्म्येन घटस्तदुच्यते घटो न पटः पटो न घट इति वा। घटो घटात्मना घट एव न पटः, पटश्च पटात्मना पट एव न घट इत्यर्थः। चतुर्थस्त्रैकालिकाभावोऽत्यन्ताभावः, स च नित्यः। यथा खपुष्पं नास्ति शशशृङ्गं नास्तीत्यादिः। भूतले घटो नास्तीत्यादौ तु उत्पादविनाशशाली सामयिकापरपर्यायः पञ्चमोऽभावः। अयमपि अत्यन्ताभाव एवेति केचित्।

अभावोऽधिकरणात्मक एव लाघवादिति कश्चित्। तन्न अनन्ताधिकरणात्मकत्व-कल्पनापेक्षया अतिरिक्तकल्पनाया एव लाघवात्। एवं च घटाभाववद् भूतलम् इत्याधाराधेयभावोऽप्युपपद्यते। जले गन्धाभावस्य प्रत्यक्षं च सम्भवति, अन्यथा गन्धाभावस्य जलात्मकत्वेन जलस्य च घ्राणेन ग्रहीतुमशक्यत्वान्न स्यात्प्रत्यक्षं गन्धाभावस्य। अतिरिक्तत्वे तु घ्राणेन गन्धवद् गन्धाभावस्यापि प्रत्यक्षं स्यादेव। येनेन्द्रियेण यद् वस्तु गृह्यते तेनैव तदभावस्तन्निष्ठा जातिश्चापि गृह्यते इति न्यायात्।

शास्त्रस्यैतस्य त्रिधा प्रवृत्तिः—उद्देशो लक्षणं परीक्षा चेति। नाम्ना पदार्थाऽभिधानम् उद्देशः सामान्येन। विभागोऽपि उद्देश

१ घटाभाववद्भूतलमित्यत्र घटाभावो भूतलमेवेत्यर्थः। पृथक्पदार्थकल्पना न करणीया स्यादिति लाघवम्।

२. यत्र यदधिकरणं तत्र तत्स्वरूपोऽभावः स्यात्, तथा च घटाभावः क्वचिद् भूतलस्वरूपोऽन्यत्र मठस्वरूप इतरत्र कटस्वरूप इति तदपेक्षयाऽभावस्यातिरिक्तपदार्थकल्पने परमं लाघवम्।

३ स्पष्ट प्रतीयमानः। भिन्नयोरेवाधाराधेयभावो नाभिन्नयोः।

४. अभावस्याऽधिकरणात्मकत्वे तु जले गन्धो नास्तीत्यत्र।

एव, स हि विशेषः । स्थितन्तु कतिविधास्त्वेत्युपसंख्यानं विभागः ।

समानाऽसमानजातीयव्यवच्छेदको धर्मो लक्षणम् । यथा गन्धवत्त्वं पृथिव्या लक्षणम् । तद्धि द्रव्यत्वेन समानजातीयेभ्यो जलादिभ्योऽसमानजातीयेभ्यो गुणादिभ्यश्च व्यवच्छिनत्ति पृथिवीमिति भवति लक्षणं पृथिव्याः ।

परीक्षा च, यथालक्षणमिदमुपपद्यते न वेति प्रमाणैरर्थावधारणम् । तेन हि भवति परित ईक्षा । ईक्षा पुनरीक्षणमवधारणं निश्चय इति ।

तत्रोक्तः सामान्येन विशेषेण चोद्देशः सर्वेषाम् । द्रव्यगुणातिरिक्तानां च पञ्चानामल्पवक्तव्यत्वेन लक्षणपरीक्षे अपि पूर्वमुक्ते एव । सम्प्रति प्राधान्याद् द्रव्यगुणयोरेव लक्षणपरीक्षे प्रत्येकं प्रारभ्येते तत्र द्रव्येषु—

गन्धवती पृथिवी ।

पृथिव्येव गन्धवती, गन्धो गुणो, गुणिनी पृथिवी, तयोः सम्बन्धः समवाय इति समवायेन गन्धवत्त्वं पृथिव्या लक्षणम् । तेन [1]स्वाश्रयसंयोगसम्बन्धेन गन्धवति जलादौ नातिव्याप्तिः । अलक्ष्यवृत्तित्वं लक्षणस्यातिव्याप्तिः ।

ननु पाषाणे नास्ति गन्धः, स कथं स्यात् लक्षणान्वितः । तस्मादव्याप्तं लक्षणमिदम् । लक्ष्यैकदेशावृत्तित्वमव्याप्तिः । सत्यं, अस्ति पाषाणे गन्धः केवलमनुत्कटतया नोपलभ्यते । कथमन्यथा[2] पाषाणभस्मनि चूर्णादावुपलभ्येत गन्धः । [3]यद् द्रव्यं

१ स्व=गन्धस्तदाश्रयः पृथिवी तस्याः संयोगो जले ।

२ अन्यथा=पाषाणस्य गन्धवत्त्वाभावे ।

३ यद् द्रव्यं=भस्मादि द्रव्यं, यस्य द्रव्यस्य पाषाणादेर्ध्वंसेन जन्यं, तद्=भस्मादि द्रव्यम् ।

यस्य द्रव्यस्य ध्वंसेन जन्यं तत् तदुपादानावयवारब्धमिति हि नियमः । तथा च, ये एवावयवाः पाषाणारम्भकास्त एव तद्भस्मारम्भका इति तैरेवावयवैरारब्धे पाषाणे गन्धोऽस्त्येव पृथिवीत्वात् । अनुपलब्धावनुद्भूतत्वमेव हेतुः ।

एवं च पृथिवी शुक्ल-नील-पीताद्यनेक-रूपवती, षड्विध-रसवती च, सौरभाऽसौरभभेदेन द्विविधस्तत्र गन्धः । स्पर्शश्चास्याः पाकजोऽनुष्णाशीतः । पाकजः=पाक-परिवर्ती । नोष्णो न शीतोऽनुष्णाशीतः । नित्याऽनित्या चेति द्विविधा हि सा । नित्या परमाणुरूपा । अनित्या कार्यरूपा । इयमनित्या कार्यरूपा पृथिवी अवयविनीत्युच्यते । सन्ति हि अस्या अवयवाः । अवयवैः परमाण्वादिभिरवयविनो द्व्यणुकादयः क्रमशो जन्यन्ते । समानं चैवं जल-तेजो वायुष्वपि ।

अथ कोऽयम् अवयवी ?, सर्वोऽप्ययं घटादिर्घटावलोकस्तु परमाणुपुञ्ज एव, न च तथा सति प्रत्यक्षं न स्यात्तस्य । अतीन्द्रिया हि परमाणवः । एकस्य परमाणोरप्रत्यक्षेऽपि तत्समूहस्य सम्भवति प्रत्यक्षम् । एकस्य केशस्याऽप्रत्यक्षेऽपि केशसमूहस्य यथा प्रत्यक्षम् । कथमयं प्रत्यय ?—'एको महान् घट' इति । परमाणवो हि बहवः सूक्ष्माश्च । कथमेकत्वम् महत्त्वं च । सेनावनादिवत् स्यात्=अनेकेषु सैनिकेषु भवति प्रत्यय एकेव महती सेना, तथा अनेकेषु वृक्षेषु एकं महदिदं वन-

१ तस्य पाषाणाद्भिन्नस्य उपादानभूता ये पार्थिवावयवा-स्तैरारब्धमिति ।

२ अवयविनश्च, परमाण्वादिभिर्जन्यत्वं च द्व्यणुकादीनाम् ।

३. लोको विषय । लोक्यते=ज्ञायते इति लोकः ।

४ परमाणुपुञ्जरूपत्वे ।

मिति । ततश्च परमाणुसमूह एव गवादिर्घटादिर्लोके न कश्चिदवयवी विषय इति ।

नैवम्—अस्ति अवयवी यो गोघटादि-व्यवहारविषयः, प्रत्यक्षविषयश्च । अन्यथा अतीन्द्रिय-स्वभावानां परमाणूनां समूहेऽप्यतीन्द्रिय एवेति न स्यात् समूहस्यापि प्रत्यक्षम् । केशोपन्यासस्तु विषमः । केशो हि नातीन्द्रियः समीपे तस्य प्रत्यक्षात् । सेनावनादिषु हस्त्यश्व-प्रत्ययोऽपि परमाणु-समूहे नोपपद्यते । गृह्यन्ते ह्यत्र अवयवानां पृथक्त्वम्, यत्र सैनिका वृक्षा वा नातीन्द्रियाः, केवलं दूरत्वहेतोः कारणान्तरतो वा पृथक्त्वस्याग्रहणाद् भ्रान्तोऽपि तथा प्रत्ययः सम्भवति सेनादौ वनादौ वा । इह तु अणुपरिमाणवत्सु अतीन्द्रियेषु परमाणुषु कथं भ्रान्तोऽपि तथा प्रत्ययः परमाणुपुञ्जे स्यात् । तस्मात् सिद्धोऽवयवी, योऽसावर्थस्य महाँश्चाल्पीयाँश्चापेक्षयोभा-पापी प्रत्यक्ष-विषयश्च । तेनैव प्रवर्तन्ते सर्वे व्यवहारा, तद-भावे तु सर्वमेव ज्ञानं मिथ्याज्ञानमेव स्यात् । अवयविनो-ऽभावात्, सूक्ष्मस्य कारणीभूतस्य परमाणुजातस्य चातीन्द्रिय-तया उपलम्भाविषयत्वात् । सम्यग्ज्ञानमपि तदा किं स्यात्, यद्यदुपलभ्यतेऽवयविविधेनाभाति तदिति ।

---

१ उपन्यासो दृष्टान्तः । विषमोऽसङ्गत ।

२. सेनावनादौ ।

३. भ्रान्तो मिथ्या ।

४ इन्द्रियजन्यप्रत्यक्षाविषयेषु ।

५ रूपादविनाशशील ।

६ अयं घट, अयं पट इत्यादिरूपम् ।

७ अवयव्येव तदित्यर्थः ।

## यत्रावयवधाराविश्रान्तिः स परमाणुः ।

अवयविनोऽस्ति अवयवधारा—घटस्य कपालौ, कपालस्य कपालिके इत्येवम् । सेयं नाऽविश्रमाऽनन्ता वा । तथात्वे साम्यमापद्येत मेरौ सर्षपे च । उभयोरपि अवयवधारायाः साम्यात् किं कृतं भवेद् वैषम्यम् । अस्ति च वैषम्यम् । अथ स्यात् क्वचिद् विश्रान्तिः । ततोऽवयव-बहुत्वाल्पत्वकृतं वैषम्य-मुपपद्यतेतमाम् । यत्र अवयवधारायाः विश्रामः सोऽयं परमाणुः, नास्ति तस्मादणुतरोऽणुतमो वा कश्चित् । अनवयवत्वात्तस्य ।, अत एव चायं नित्योऽपि । न च त्रसरेणावेव विश्रान्तिः स्यादवयवधारायाः, चाक्षुषं हि द्रव्यं त्रसरेणुः सावयवो घटवत् । तदवयवाश्च द्व्यणुका अपि सावयवा यतो महदारम्भकास्ते । ये हि महदारम्भकाः सावयवा यथा कपालाः । न च परमाणुरपि सावयवोऽनवस्थानात् । किञ्च अणुपरिमाण-तारतम्यस्यापि विश्रान्तिः परमाणावेव । महत्परिमाणतारतम्यस्य यथा गगने । परमाणुस्वरूपं च—

"जालान्तर्गते भानौ यत्सूक्ष्मं दृश्यते रजः ।
तस्य षष्ठतमो भागः परमाणुरुदाहृतः ॥"

---

१ अनन्तत्वे ।

२. अनन्तत्वमेव साम्यम् ।

३. अन्तिमावयवत्वात् सर्वेभ्योऽपि सूक्ष्मत्वाच्चेत्यर्थः ।

४. महतः=महत्परिमाणवत, आरम्भका जनका. ।

५. तस्य सावयवत्वे तदवयवोऽपि ततस्तदवयवोऽपि सावयवः स्यादित्यनवस्था ।

कार्यरूपासौ पृथिवी त्रिधा, शरीरमिन्द्रियं विषयश्चेति ।

पार्थिवं हि शरीरं द्विधा—योनिजमयोनिजं च । शुक्र-शोणितसन्निपातेन योनेर्जातं योनिजम् । तदपि जरायुजा-ऽण्डजभेदेन द्विविधम् । जरायुजं मनुष्य-पशु-मृगादीनाम् । अण्डजं पक्षि-सर्पादीनाम् । अनपेक्षित-शुक्र-शोणित-सन्निपात-मयोनिजम्,—स्वेदजमुद्भिज्जं च । स्वेदजं यूका-मत्कुण-कृमि-दंशादीनाम् । उद्भिज्जं तरुगुल्मादीनाम् । सर्वेषां चैतेषां गन्धप्राधान्यात्पार्थिवत्वम् । क्लेदादिसत्तया जलीयत्वादिकं नो शङ्कनीयम्, क्लेदादिविनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानात् । गन्धोपलब्धेश्च पार्थिवत्वसिद्धेः ।

नासाग्रवर्ति घ्राणं पार्थिवमिन्द्रियम् । तद्धि रूपादिषु केवलं गन्धं व्यञ्जयति तत एव पार्थिवम् । यथा कुङ्कुमस्य केवलं गन्धं व्यञ्जयद् घृतं पार्थिवम् ।

उपभोगसाधनं विषयः । द्व्यणुकादिब्रह्माण्डपर्यन्तो घटादिः सर्वोऽपि पार्थिवो विषयः । इदं हि सर्वं यददृष्टाधीनतया जातं साक्षात्परम्परया वा तदुपभोगं जनयत्येव । शरीरमिन्द्रियं चापि तथा, प्रकारान्तरोपन्यासस्तु प्रपञ्चार्थः । शिष्यबुद्धि-वैशद्यार्थश्च प्रपञ्चः ।

शीतस्पर्शवज्जलं स्नेहसमवायिकारणम् ।

जले शीत एव स्पर्शः । तेजः संयोगादुष्णता-प्रतीतिरौपा-धिकी भ्रान्तिः । अत एव तेजःसंयोगापगमे भवति पुनः शैत्यम् । स्नेहसमवायिकारणं जलमेवेति जल एव स्नेहः ।

१. गमयति बोधयति वा ।
२. 'केशर' नाम्ना प्रसिद्धस्य गन्धद्रव्यस्य ।
३ विषय एवेत्यर्थः, उपभोगसाधनत्वात् ।

घृतादावपि स्नेहस्तदन्तर्वर्ति-जलस्यैव । जले मधुर एव रसः । यद्यपि प्रत्यक्षेण कोऽपि नानुभूयते तत्र रसस्तथापि हरीतकी-भक्षणं जलीय-माधुर्य-व्यञ्जकमनुभवानुरोधात् कल्प्यते । जम्बीर-जलादौ क्षारत्वादिप्रतीतिराश्रयोपाधिकी । अभास्वरशुक्लं जले रूपम् । कालिन्दीजले तु नीलिमोपलब्धिराश्रयोपाधिकृता भ्रान्तिः । भवति चात एव वियति विक्षेपे धवलिमोपलब्धिः । सांसिद्धिकं च द्रवत्वं जले प्रत्यक्षसिद्धम् ।

जलं द्विधा नित्यमनित्यं च । नित्यं परमाणुरूपम्, अनित्यं कार्यरूपम् । कार्यरूपं पुनस्त्रिधा शरीरेन्द्रियविषयभेदात् । शरीरमयोनिजं वरुणलोके । पार्थिवभागोपष्टम्भाच्चोपभोगक्षमं तत् । इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति, विषयश्च सरित्-समुद्र-हिम-करकादिः । करका हिमं च कठिनमपि न पार्थिवम्, उष्मणा विलीनयोस्तयोः प्रत्यक्षतो जलीयत्वसिद्धेः ।

शैत्यातिशयेन संहन्यमानाः खल्वापो मेघगताः करकादि-भावमापद्यन्ते । दिव्यतेजःसंयोगादपां संघातः करकादिभाव इत्यन्ये, पुनर्विलयनं च पुनर्विजातीयतेजःसंयोगादेवेति प्रत्यक्षसिद्धम् । तथा च कणादसूत्रम् "अपां संघातो विलयनं च तेजःसंयोगात् ।" किन्त्वेवं जलस्य सांसिद्धिक-द्रवत्वधर्म-त्वं चिन्त्यं स्यात् । अदृष्टविशेषेण द्रवत्वप्रतिरोधात्काठिन्यप्रत्ययो भ्रान्तिरित्यपरे ।

उष्णस्पर्शवत्तेजः ।

उष्ण एव स्पर्शस्तेजसि । रूपं शुक्ल-भास्वरम् । चन्द्रकिरणेषु तदन्तर्वर्ति-जलस्पर्शेन शीतेनाभिभवान्नानुभूयते उष्णस्पर्शः । अग्नौ पार्थिवरूपेण लोहितेनाभिभूतं नानुभूयते शुक्लरूपम् । द्रवत्वं तत्र नैमित्तिकम्, अग्निसंयोगादिनिमित्तजं सुवर्णादौ ।

अथापि द्विविधं तेजः, नित्यमनित्यं च। नित्यं परमाणुरूपम्, अनित्यं कार्यरूपम्। कार्यरूपं पुनस्त्रिधा शरीरमिन्द्रियं विषयश्चेति। शरीरं सूर्यलोके तैजसम्। पार्थिवमाग्नोपष्टम्भादुपभोगक्षमम्। इन्द्रियं रूपग्राहकं चक्षुः कृष्णताराग्रवर्ति। विषयरूपं च तेजश्चतुर्विधम्—भौमं दिव्यमुदर्यमाकरजं चेति। भौमं वह्न्यादि, दिव्यमबिन्धनं विद्युत्, सूर्यादिकं च। भुक्ताहारपरिणामहेतुरुदर्यम्। आकरजं च तेजः सुवर्णादि।

ननु कथं सुवर्णं तेजः। तद्धि न किञ्चित्प्रकाशयति न वा तमस्युपलभ्यते, पीतं गुरुत्ववच्च। तेजो हि भास्वरशुक्लं गुरुत्वाभाववच्च।

अत्रोच्यते सुवर्णं तेज एव, अत्यन्तानलसंयोगेऽपि तत्रोत्पन्नद्रवत्वं नोच्छिद्यते यतः। दृष्टं हि नैमित्तिकं द्रवत्वं पृथिव्या घृतजत्वादेः अत्यन्तानलसंयोगे विनश्यत्। अनुच्छिद्यमानमिदं नैमित्तिकं द्रवत्वं तैजसमेव। नेदं पृथिवी गन्धाभावात्। नाअन्या पृथिवी। पीतरूपं गुरुत्वं चात्रतद्गतवर्ति-पार्थिवभागस्य। भास्वरशुक्लरूपाग्रहस्य पार्थिवरूपेणाभिभवात्। अत एव न प्रकाशकं, नाप्युपलभ्यते तमसि। एतेन रजतादीनामपि तैजसत्वं व्याख्यातम्।

---

१ द्वयोरेव नैमित्तिकं द्रवत्वं पृथिव्यां तेजसि च। घृतजत्वादिरूपपृथ्वीद्रवत्वमत्यन्तानलसंयोगे विनश्यतीति दृष्टम्। सुवर्णे स्थितं नैमित्तिकं द्रवत्वं चात्यन्तानलसंयोगे न विनश्यतीति सुवर्णं तेज एवेति निर्विवादं सिध्यति।

२. इदम्=सुवर्णम्।

३. भास्वरशुक्लरूपाभिभवादेव।

## रूपरहितः स्पर्शवान् वायुः ।

प्रत्यक्षसिद्धमिदं वायौ नास्ति रूपमिति । कदाचिन्महावात्यादौ लोहितादिरूपं तु पार्थिवानां रजसामेव । स्पर्शश्च[1] तस्यानुष्णाशीतोऽपाकजोऽनन्यसाधारणः । सोऽयं विलक्षणस्पर्श एव वायोरनुमाने लिङ्गम् । विलक्षणशब्दः, तृणादीनामाकाशे निरालम्बा धृतिः शाखादीनां कम्पश्चापि तस्यानुमाने भवति लिङ्गम् । केचित्तु वायुं स्पृशामीत्यनुभवानुरोधात् त्वाचप्रत्यक्षोपलब्धिर्वायुरिति मन्यन्ते । तत्रापरे त्वाचं प्रत्यक्षमपि रूपवतामेवेति वायौ रूपाभावान्न त्वाचप्रत्यक्षं तस्येत्याचक्षते । वायुं स्पृशामीति प्रतीतिस्तु स्पर्शेन वायुमनुमिनोमीत्यनुमितिरूपैवेति न प्रत्यक्षो वायुः ।

पूर्ववत्सोऽपि द्विविधः, नित्योऽनित्यश्च । नित्यः परमाणुरूपः । अनित्यः कार्यरूपः । सोऽपि त्रिधा शरीरमिन्द्रियं विषयश्चेति । शरीरमयोनिजं पिशाचादीनाम् । पार्थिवभागोपष्टम्भः समान. । इन्द्रियं स्पर्शग्राहकं शरीरव्यापि त्वक् । विषयः प्राणादिर्महावायुपर्यन्तः । मेघादिप्रेरण-धारणादिसमर्थो महावायु । अन्तःशरीरे धातु-मल-रसादीनां प्रेरणहेतुः प्राणः[2] । स चैकोऽपि उपाधिभेदात्पञ्चधा । प्राणनात्प्राणो हृदये, अपनयनादपानो गुदे, समं नयनात्समानो नाभिमण्डले, उन्नयनादुदान कण्ठे, विविधं नयनाद् व्यान सर्वशरीरे ।

## शब्दगुणकमाकाशं विभु नित्यं च ।

शब्द एव विशेषगुण आकाशे । शब्दाश्रयतयैव हि सिध्यत्याकाशम् । तथाहि—शब्दो गुणः, तदाश्रयः किमपि द्रव्यं स्यात्

१. शाईरूपो वायुरपि । २ प्राणः ।

संयोगवत्। नहि गुणो नाम द्रव्यानाश्रयः कश्चित्। नायं स्पर्शवतां विशेषगुणः अकारणगुणपूर्वकत्वात्। यथा पृथिव्यादि-विशेषगुणा रूपादयः कारणगुणपूर्वकाः। शब्दो न तथा। नापि वायौ कारणगुणपूर्वक उत्पत्तुमर्हति, अयावद्द्रव्य-भावित्वात्। न च दिक्कालमनसां गुणो विशेषगुणत्वात्। नहि दिशि काले मनसि वा कश्चिद् विशेषगुणस्तिष्ठति। नाप्यात्मनो विशेष गुणो बहिरिन्द्रिय-ग्राह्यत्वात्। नहि कोऽपि आत्मविशेषगुणो बहिरिन्द्रियग्राह्यः। परिशेष्यादाकाशं शब्दाश्रयो द्रव्यं सिध्यति। अतः शब्द एवाकाशलिङ्गम्। तत एव निष्क्रमणं प्रवेशनं च सम्भवति। नास्त्याकाशीयं शरीरम्। श्रोत्रमाका-शीयमिन्द्रियम्। आकाशदेशः श्रोत्रम्। श्रोत्रोपलब्धिः शब्दः। विभु नित्यं चेदमाकाशम्।

---

१. यथा संयोगो गुणस्तदाश्रयो द्रव्यं पृथिव्यादिद्रव्ये वर्तते।

२. पृथिवी-जल तेजो-वायूनाम्।

३. 'कारणगुणाः कार्यगुणानारभन्ते' इति तार्किक-नियमः। तथा च कारणगुणः पूर्व=समवायिकारणं यस्य स कारणगुणपूर्वकः, यथा तन्तुरूपारब्धं पटरूपम्। कारणगुणपूर्वको न भवति सोऽकारण-गुणपूर्वकः, शब्दश्च तथा, नहि आकाशकारणं तदवयवारम्भि यद्-गुणैरयं जनितः स्यात्।

४. यस्य हि गुणस्य द्रव्यस्थिति-पर्यन्तं स्थितिः स यावद्द्रव्यभावी, यथा पृथिवीगुणो गन्धः। शब्दस्तु न तथा, विद्यमानेऽपि स्वाश्रयी-भूते द्रव्ये क्षणान्तरे विनश्यति यतः। ततोऽयावद्द्रव्यभावी गुणः शब्दो न वायुगुणो भवितुमर्हति, वायुगुणानां यावद्द्रव्यभावित्वात्।

५. कर्णशष्कुली-देशावच्छिन्नमाकाशं श्रोत्रमित्यर्थः।

## परमपरं युगपच्चिरं क्षिप्रमित्यादि-व्यवहारहेतुः कालः।

परमपरम्=पुराणं नवीनं च, युगपच्चिरं क्षिप्रमिति प्रसिद्धम्। यमपेक्ष्य यस्योत्पत्तिरल्पेन सूर्यपरिस्पन्देनान्तर्धीयते, तमपेक्ष्य सोऽपरः। अपरं चापेक्ष्यान्यः परः। तत्र यद् द्रव्यं परस्यापरस्य वा सूर्यपरिस्पन्देन सम्बन्धं घटयति तद् द्रव्यं कालः। स ह्येतत्सर्वं कलयति। तथा चायं युवा स्थविरोऽसौ, युगपदुत्पद्यन्ते धान्यबीजानि, चिरं जीव सौम्य, क्षिप्रं याति वायुः, इदानीं घटस्तदानीं पृथिवीत्याद्याः प्रत्ययाः सूर्यपरिस्पन्दं विषयीकुर्वन्ति। तत्र सूर्यपरिस्पन्देन युव-स्थविर-धान्यबीजादीनां सम्बन्धः कश्चित्स्यादेव। नायं संयोगः सम्भवति, स्वाश्रय-तपन-संयोगि-संयोगरूप एव स्यादित्येतत्सम्बन्धघटकः कालः सिध्यति। स्वं=सूर्यपरिस्पन्दः, तदाश्रयः सूर्यः, तत्संयोगी काल, तत्संयोगो युव-स्थविर-धान्यबीजादावित्ति। स चैको विभुर्नित्यश्च। उपाधिभेदात्तु क्षण-मुहूर्ताहोरात्र-मास-वर्षादि-व्यवहारविषयः। प्रथमक्षणे सूर्यपरिस्पन्दजन्य-विभाग-प्रागभावावच्छिन्नं कर्मैवोपाधिः। एवमुत्तरत्रापि कल्प्यताम्। मुहूर्त्तादिव्यवहारश्च तत्तत्क्षणकृतैरेव। सर्वत्रानित्येषु इदानीं जातस्तदानीं जात इति व्यवहारदर्शनात्सर्वेषामप्युत्पत्तिमतामयं साधारणो हेतुः।

## दूरान्तिकादि-व्यवहारहेतुर्दिक्।

दैशिकं परत्वं दूरत्वम्, दैशिकमपरत्वं चान्तिकत्वम्। दूरमदः, अन्तिकमिदम्, इत्यत्र परत्वापरत्वयोरसमवायिकारणं

१ एतत्=जगद्वस्तु, कलयति=परिवर्तयति।

२. परिस्पन्दः क्रियाविशेषस्तस्य धान्यबीजादीनां संयोगासम्भवात्।

संयोगसत्त्वाश्रयतया दिक् सिध्यति। सा चैका विभ्वी नित्या च। उपाधिभेदात्तु भजति प्राच्यादि-व्यपदेशभाक्। यथा हि—पुरुषस्योदयगिरिसन्निहिता या दिक् सा तस्य प्राची,=प्राग् अस्यां सविता अञ्चतीति। तस्यैवोदयगिरिव्यवहिता प्रतीची,=प्रतीपम् अञ्चति सविता अस्यामिति। सुमेरुगिरिसन्निहिता तस्योदीची=ऊर्ध्वमञ्चति सविता अस्यामिति। सुमेरु-व्यवहिता च तस्यावाची=अवाग् अञ्चति सविता अस्यामिति।

## ज्ञानाधिकरणमात्मा ।

पश्यति चक्षुषा, शृणोति श्रोत्रेण, जिघ्रति घ्राणेन, स्वदते रसनेन, स्पृशति स्पर्शनेन, मनसा संकल्पयते मनुत इति ज्ञाने करणानि इन्द्रियाणि आत्मा कर्ता। ततो जानाति इन्द्रियैर्योऽर्थान् स आत्मा चेतनोऽधिष्ठाता च शरीरादीनाम्, चेतनो ह्यधितिष्ठति। एकैकविषयाणीन्द्रियाणि, न चक्षू रूपातिरिक्तं गृह्णाति, श्रोत्रं वा शब्दातिरिक्तम्, आत्मा—सर्वविषयः सर्वं गृह्णाति, रूपदर्शी स्पर्शं रसं गन्धं चापि गृह्णाति, यद् यत्करणमुपादत्ते तेन तेन गृह्णाति। प्रतिसन्धत्ते च योऽहं चक्षुषाऽद्राक्षम्, सोऽहं स्पर्शनेन स्पृशामि। ततो नेन्द्रियाणां कर्तृत्वं चेतनत्वं वा।

## इन्द्रियान्तरविकाराच्च नेन्द्रियाणां चैतन्यम् ।

आम्रादिफले दृष्टे तद्रसानुस्मृतौ मुखे रसनेन्द्रियस्य रसगर्धिप्रवर्तितो जिह्वोदकसम्प्लवो भवति सोऽयमिन्द्रियान्तरविकारो नेन्द्रियचैतन्ये उपपद्यते, यतो नान्यदृष्टमन्यः स्मरति।

---

१. "सर्वेषामेव वर्षाणां मेरुरुत्तरत स्थित"।

२. रसगर्धि=रसग्रहणलालसा, तया प्रवर्तितः। जिह्वाया उदकस्य सम्प्लवः=संचरणम्।

## करणानां सकर्तृकत्व-नियमाच्च ।

सर्वं हि करणं सकर्तृकं दृष्टं यथा कुठारादि, करणानि खल्विन्द्रियाणि, तस्मात्सकर्तृकाणि, ततस्तद्भिन्नश्चेतन आत्मा सेत्स्यति । किञ्चेन्द्रियाणां चैतन्ये तेषामुपघाते[1] स्मृतिर्न स्यात्, नान्धः पूर्वदृष्टं स्मरेत्, बधिरो वा श्रुतपूर्वं शब्दम् ।

## नापि चैतन्यं शरीरस्य मृतेषु व्यभिचारात् ।

यदि शरीरमेवात्मा चेतनः स्यात् तर्हि मृतशरीरमपि चेतयेत, जानीयाद् वा सर्वं विषयजातम् । नैव चेतयते, जानाति वा किञ्चित् ।

## कृत-हानमकृताभ्यागमश्च प्रसज्येत ।

पूर्वजन्मनि येन शरीरेण कृतं हिंसादि नाशो हिंसादिफलेन युज्यते । यश्चेह जन्मनि युज्यते न तेन कृतं तद्धिंसादि । मुक्त्यर्थो वा यत्नो व्यर्थः । शरीरस्यैव चैतन्ये कोऽप्यस्मतो मुमुक्षुर्नित्यः । तस्माच्च शरीरमात्मा चेतनो वा ।

## ननु मनश्चेतनमात्मा च स्यात् ।

सर्वविषयमेकं नित्यं च तत् । तत आत्म-प्रतिपत्तिहेतु-[2] र्नानाविषयग्रहणं प्रतिसन्धानम् इन्द्रियान्तरविकारश्च संभवति मनस्येव । तत्रोच्यते—ज्ञातुर्यथा बाह्यरूपादि-ज्ञानकरणं चक्षुरा-

---

१. उपघाते=विनाशे । तेषाम्=इन्द्रियाणाम् ।

२. आत्मप्रतिपत्तिहेतुः=आत्मसाधको हेतुः । रूपादिनानाविषयग्रहणं चक्षुरादिद्वारा । प्रतिसन्धानम्=एककर्तृत्वेनानुभवनम्, योऽहं चक्षुषाऽद्राक्षं सोऽहं त्वचा स्पृशामीत्यादिरूपम् । इन्द्रियान्तर-विकारश्च पूर्वोक्तः । तदिदं सर्वं मनस एकत्वेन सम्भवितु मर्हतीत्यर्थः ।

वस्ति—चक्षुषा पश्यति घ्राणेन जिघ्रति। एवमाभ्यन्तर-सुख-दुःखादिज्ञानकरणमप्यपेक्ष्यते। येनायं सुखं दुःखं वा जानाति मन्यते संकल्पयते च। तदिदमाभ्यन्तरं करणं मनः। तथापि सकर्तृकमेव स्यात् करणत्वादिति तद्भिन्नः कर्ता आत्मा सिध्यति। किञ्च मनसि ज्ञानसुखादिस्वीकारेऽप्रत्यक्षत्वं तेषामापद्येत, मनसोऽणुत्वात्प्रत्यक्षे महत्त्वस्य कारणत्वात्।

## आत्मा नित्यः।

देहोत्पत्तेः प्राक् देहपातानन्तरं चेति सदाऽवतिष्ठते आत्मा। जातमात्रस्य हि कुमारस्य पूर्वाभ्यस्त-स्मृत्यनुबन्धात्स्तन्यपाने दृश्यते प्रवृत्तिः। अस्मिन् जन्मन्यननुभूतेषु हर्ष-भय-शोकहेतूपस्थितेषु हर्ष-भय-शोकानां प्रतिपत्तिश्च। किञ्च सर्वस्यापि जन्तोरियं भवति आत्माशीः—'मा न भूवं भूयासम्' इति। जातमात्रस्य कृमेरपि मरणत्रासश्चानुमापयति पूर्व-पूर्वतरं जन्म, यत्रायं परमदुःखदं मरणमनुभूतवान्, इह च पुनः स्मरंस्तत-स्त्रस्यति।

## वीतराग-जन्मादर्शनाच्च।

वीतरागस्य योगिनो न भवति पुनर्जन्म, ततोऽर्थादापद्यते 'सरागो जायते' इति। जायमानोऽयं रागानुविद्धो जायते। रागस्य हेतुः पूर्वानुभूत-विषयचिन्तनम्। पूर्वानुभवश्च विषयाणां

१. महत्त्वं चाक्षुषे प्रत्यक्षे हेतुरिति सिद्धान्तः, मानसप्रत्यक्षेऽपि महत्त्वं हेतुः। आत्मनि ज्ञानसुखादिस्वीकारे तु आत्मनो महत्त्वसद्भावात् भवति प्रत्यक्षं सुखादीनाम्।

२. देहनिवृत्तिः = उत्पत्तिः।

३. न अभूवम् इति मा किन्तु भूयासमेव, (माहं नाशमापम्)।

पूर्वजन्मनि, इति सिद्धमस्य पूर्वं जन्म। तत्राप्ययं रागानुविद्ध एव जात इति पूर्व-पूर्वतर-पूर्वतम-शरीरसम्बन्धादनादिरयमात्मा सिध्यति। अनादेश्च भावस्य नाशायोगान्नित्यत्वं तस्य।

## चेष्टयाऽनुमीयते परत्र।

स्वशरीरे स्वयमात्मा 'अहं सुखी' 'अहं दुःखी' इत्याद्यहंप्रत्ययविषयो मानसप्रत्यक्षगम्यः। परकीय-शरीरे चायं चेष्टयाऽनुमीयते। हिताऽहित प्राप्ति-परिहार-फलकं शारीरं कर्म चेष्टा। चेतन-प्रयत्न-साध्यया चानया व्यवस्थित रथगत्या सारथिरिवात्माऽनुमीयते।

## प्रतिशरीरं भिन्नश्चायं व्यवस्थातः।

यद्यभिन्नः स्यात् नैव व्यवस्था स्यात् सुखी दुःखी वा कश्चित्। विद्वान् जडमो वा कश्चिदिति।

## जीवेश्वरभेदश्चापि नाना।

आत्मा द्विविधो जीवात्मा परमात्मा च। परमात्मा ईश्वरः, क्लेशादिभिरपरामृष्टः, एको जगतः कर्ता, साम्यातिशय-विनिर्मुक्तः, सर्वज्ञश्च। सर्वं हि कार्यं कर्तृजन्यं दृष्टं यथा घटादि। कार्यं च पृथिव्यादि, तदपि कर्तृजन्यमेव स्यात्। यश्चेदं सर्वं महाशक्तिर्जनयति स एवायमीश्वर। तथा चागमः—'द्यावाभूमी जनयन् देव एको विश्वस्य कर्ता भुवनस्य गोप्ता' इति।

जीवाश्च सुखदुःखादिमन्तः शरीरसंयोग वियोगधर्माणोऽनन्ताः। धर्मभेदात् शास्त्रप्रामाण्याच्च न जीवेश्वरयोरैक्यम्।

---

१. हितप्राप्तिरहितपरिहारश्च फलं यस्य तादृशम्।

२. अनया = चेष्टया।

३. नास्ति तत्समः कश्चिद्, नापि तदतिशयी वा, तस्मात् साम्यातिशयविनिर्मुक्तः।

धर्मभेदः स्पष्टः । शास्त्रप्रमाणं च—
"द्वा[2] सुपर्णा सयुजा सखाया समानं वृक्षं परि-षस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ।"

## क्षणिकविज्ञानमात्मेति बौद्धाः ।

नायमात्मा ज्ञानाधिकरणं किन्तु स्वयं विज्ञानमेवात्मा ज्ञायताम्। मम विज्ञानं क्षणिकं, सर्वं क्षणिकमिति नियमात्। तदेतन्निरस्यते—आत्मभूतमिदं विज्ञानं किं-विषयम्?, नहि ज्ञानं च नाम निर्विषयं च स्यात्। सर्वविषयं किञ्चिद्-विषयं वा[1], सर्वविषयं चेत्तर्हि सर्वज्ञः स्यात्। यत्किञ्चिद्विषयं चेद् विनिगमकं[3] नास्ति—घटविषयं कुतो न पटविषयं, पटविषयं कुतो न घटविषयमिति ।

किञ्च क्षणिकविज्ञानं चेदात्मा स्मरणानुपपत्तिः स्यात्—येन विज्ञानात्मना दृष्टो घटः कालान्तरे स नास्ति, अन्यो विज्ञानात्मा, कथं स घटं स्मरेत्?। नान्यदृष्टमन्यः स्मरति। अन्यथा देवदत्तदृष्टं यज्ञदत्तः स्मरेत्, न च स्मरति ।

## नित्यविज्ञानमात्मेति वेदान्तिनः ।

विज्ञानमेवात्मा, तच्चेदं विज्ञानं नित्यम्। तथा च श्रुतिः

१ सर्वज्ञ ईश्वरः, अल्पज्ञा जीवाः ।

२ द्वौ सुपर्णौ=सुपतनौ पक्षिणौ सयुजौ सहयोगिनौ सखायौ सखिभूतौ (सर्वत्र औत्. डा वैदिक)। समानं वृक्षम् एकमेव शरीररूपं वृक्षं परिषस्वजाते समाश्रितवन्तौ, जीव ईश्वरश्च । तयोरन्यो जीवस्तदभिमानी सन् पिप्पलं सुखदुःखरूपं फलं स्वादु अस्वादु वा अत्ति=भुङ्क्ते । अन्य=ईश्वरः अनश्नन् अभुञ्जान साक्षिरूपतया केवलम् अभिचाकशीति=पश्यति ।

३ इत्थमेकतर-पक्षसाधिका युक्तिर्विनिगमकं तन्नास्तीत्यर्थः ।

'अविनाशी वा अरे अयमात्मा' "नित्यं विज्ञानमानन्दं ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्म" इति च। आत्मा ब्रह्मेति नार्थान्तरं तेषां[1]। अन्यत्रोक्तो[2] जीवब्रह्मादिभेदस्तूपाधिकृत[3] एव। एकमेवाद्वितीयं विज्ञानानन्दस्वरूपं हि तदिति तेषामाशयः।

तमेवं विचार्यते—विज्ञानात्मनो नित्यस्यापि सविषयत्वं पूर्वोक्तरीत्या दुर्वारमेव। निर्विषयस्य च ज्ञानत्वे एव नास्ति प्रमाणम्। निरुक्ता[4] श्रुतिश्च विज्ञानपदेन विज्ञानाश्रयमेवाभिधत्ते। उत्तरत्र आनन्दमिति नपुंसकत्वानुरोधात्। अयमभिसन्धिः—आङ्पूर्वान्नन्दतेर्घञि 'आनन्दः' 'घञबन्ताः पुंसि' इत्यनुशासनात्पुंल्लिङ्गः, आनन्दशब्दश्च। अत्र च अर्शआदित्वान्मत्वर्थीयोऽच् प्रत्ययः, ब्रह्म-विशेषणम् आनन्दवदित्यर्थः। अन्यथा पुंल्लिङ्गः स्यात्। एवं विज्ञानमित्यस्यापि विज्ञानाश्रय एवार्थः। 'ब्रह्मविद् ब्रह्मैव भवती'ति श्रुतेश्च। वेदनविषयो यदनन्तरूप एवेति व्याघातः। ब्रह्मैवेत्यस्य च ब्रह्मसारूप्यमापद्यते इत्यर्थः, नात्यभेदः इति।

चेतनः पुरुषः पद्मपलाशवन्निर्लेपो न कर्तेति साङ्ख्याः।

पुरुष = आत्मा, चेतनः, शुद्धः = कृति-सुख-दुःखादि-सम्पर्करहितः। अतो नासौ[5] कर्ता। नाप्युपादानकारणं जगतः कार्य-

---

१. वेदान्तिमते इत्यर्थः।

२. "द्वा सुपर्णा ....." इत्यादावुक्तः।

३. शरीराभिमानित्वाद्युपाधिकृत एवेति।

४. पूर्वोक्ता श्रुति "नित्यं विज्ञानमानन्दं ब्रह्मेति"।

५. असौ आत्मा कृत्यादिरहित्यादेव न कर्ता।

कारणयोरभेदात् कार्यनाशे तस्यापि विनाश-प्रसङ्गात्[1] । प्रकृतिः कर्त्री । सा जडापि चेतनप्रतिबिम्बेन भवति चेतनेव । तस्या एव परिणामा बुद्ध्यादयः सन्तीति तेषां सिद्धान्तः ।

परीक्ष्यमाणं चेदं नासङ्गतमवतिष्ठते तथाहि—यदि प्रकृतिः कर्त्री पुरुषश्चेतनोऽसङ्गस्तदा कथं अहं कर्त्ता[2], चेतनोऽहं करोमीति चैतन्यकर्तृत्वयोः सामानाधिकरण्यप्रत्ययश्च कथं संगच्छेत । चैतन्यांशे प्रकृतौ भ्रान्तोऽयं प्रत्यय[3] इति चेत्कर्तृत्वांशेऽपि भ्रान्त एव स प्रत्ययः किम्न स्यात् । तस्मात् यश्चेतनः स एव कर्त्ता इत्येव न्यायसङ्गतम् ।

विभुर्बुद्ध्यादिगुणवान् ।

आत्मायं विभुर्व्यापकः । बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्ना धर्माधर्मौ भावनाख्यः संस्कारः सङ्ख्यादिपञ्चकं चेति चतुर्दश-गुणा आत्मनि वर्तन्ते । बुद्धिर्ज्ञानं ततो जानातीत्युच्यते, सुख-दुःखे चात्मवृत्तिनी प्रत्यक्षे । इच्छति द्वेष्टि चेति इच्छाद्वेषावात्मनि सिध्यतः, प्रयत्नः=प्रवृत्ति निवृत्तिरूपः, येनायं प्रवर्तते निवर्तते वा । धर्माऽधर्मौ च पुण्यपापशब्दवाच्यावात्मवृत्ती, याभ्यामयं तत्फलभूतं सुखं दुःखं च भुङ्क्ते । भावनाख्यः संस्कारः स्मृतिहेतुस्तेनायं पूर्वानुभूतं स्मरति । सङ्ख्या एकत्वादिका, परिमाणं परममहत्, पृथक्त्व-संयोग-विभागाश्च प्रसिद्धा एव ।

आत्मेन्द्रियादिसन्निकर्षे-ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् । सुखाद्युपलब्ध्या च तत्सिद्धिः ।

आत्मन इन्द्रियैस्तेषांचार्थैः सन्निकर्षे सत्यपि न युगप-

---

१ उपादानकारणत्वे कारणकार्ययोः साङ्ख्यमतेऽभेदात् कार्यनाशे कार्यरूपत्वेन कारणस्यापि नाशः प्रसज्येत ।

२. नहि कश्चिद् जडोऽचेतनः कर्ता भवितुमर्हति ।

३. प्रकृतौ जायमानोऽयं प्रत्ययश्चैतन्यांशे भ्रान्तः इत्यर्थः ।

दुत्पद्यन्ते ज्ञानानि चाक्षुष-रासन-श्रावणादीनि । क्रमशस्तु ज्ञानोत्पत्तिरेकैकेन्द्रिय-निमित्ता । तेनानुमीयते—अस्ति किञ्चिन्निमित्तान्तरं यस्याऽसन्निधानान्नोत्पद्यते ज्ञानं सन्निधानाच्चोत्पद्यते । सोऽयं ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् । तदिदं मनो येनेन्द्रियेण सन्निकृष्यते तदिन्द्रियनिमित्तमेवोत्पद्यते ज्ञानं नान्येन्द्रियनिमित्तमिति तत्र सिद्धिः ।

सुखाद्युपलब्धिसाधनं चेदम्, तथाहि—यद् येन न गृह्यते इन्द्रियान्तरं तस्य ग्राहकं भवति, यथा चक्षुषा रसो न गृह्यते इति रसग्रहणाय इन्द्रियान्तरं रसनम् । चक्षूरसनाभ्यां गन्धो न गृह्यते तदर्थमिन्द्रियान्तरं घ्राणम् । तैश्च स्पर्शः शब्दो वा न गृह्यते इति तदर्थं त्वक् श्रोत्रं वा इन्द्रियान्तरमस्ति । एवं चक्षुरादिभिर्बाह्येन्द्रियैः सुखादयो न गृह्यन्ते इति तदर्थं करणान्तरमन्तरिन्द्रियं मनः । [1]अन्यथाऽन्येषामपि प्रत्याख्यानप्रसङ्गः । सुखदुःखादीनां तु सर्वेषामान्तरिक-विषयाणामेकेनैवेन्द्रियेण मनसोपलब्धिर्भवतीति न तत्र करणान्तर प्रसङ्गः ।

## अणुपरिमाणं चेदम् ।

ज्ञानाऽयौगपद्यादेव मनोऽणुपरिमाणम् । यदि विभु स्यात्, युगपत्सर्वेन्द्रियैः सम्बन्धः स्यात्, ततश्च युगपद् ज्ञानानि स्युः । न च भवन्ति । ततोऽणुपरिमाणं मनः । क्वचिद् ज्ञानयौगपद्यप्रतीतिस्तु मनसोऽतिलाघवाद् उत्पलपत्र शत-व्यतिभेदवद् अलात-चक्र-दर्शनवच्च भ्रान्तैव ।

## अथ गुणाः पूर्वमुद्दिष्टाः ।

लक्षणं परीक्षा च सम्प्रति क्रमप्राप्तानां गुणानामुच्यते ।

१. पूर्वोक्तोपपत्त्यस्वीकारे । अन्येषाम्=घ्राणादीन्द्रियाणां प्रत्याख्यान प्रसज्येन ।

द्रव्याश्रितास्ते, नहि गुणो नाम द्रव्यानाश्रितः क्वचित्। निर्गुणा निष्क्रियाश्च, गुणे गुणः कश्चिन्न तिष्ठति, क्रिया वा काचित् क्वचिद् गुणे। सङ्ख्यानस्ते चतुर्विंशतिः पूर्वमुद्दिष्टाः। तेषु षोडश विशेषगुणाः, अन्ये सामान्यगुणा अष्टौ। अथ श्लोकौ—

"रूपं रसस्तथा गन्धः स्पर्शः सांसिद्धिको द्रवः।
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नश्च भावना॥
धर्माऽधर्मौ स्नेहशब्दावमी षोडशिका गुणाः।
अन्ये गुणास्तु सामान्या विद्वद्भिः परिकीर्तिताः॥"

अन्योऽपि विशेषः।

अपाकजा रूप-रस-गन्ध-स्पर्शा अपाकजं द्रवत्वं स्नेह-वेगौ गुरुत्वमेकपृथक्त्वं परिमाणं स्थितिस्थापकाख्यः संस्कारश्चेति कारणगुणपूर्वका गुणाः। बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माधर्म-भावना-शब्दाः पाकजाश्च रूप-रस-गन्ध-स्पर्शा अकारण-गुणपूर्वकाः। कारणगुणेन कार्ये ये गुणा उत्पद्यन्ते ते कारणगुण-पूर्वकाः, अन्येऽकारणगुणपूर्वकाः। संयोग-विभागौ वेगश्चेति त्रयः कर्मजा गुणाः। संयोगविभागौ बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्माऽधर्माः शब्दश्चेत्यव्याप्यवृत्तयो गुणाः। स्वात्यन्ता-भाव-समानाधिकरणोऽव्याप्यवृत्तिः[1]।

कति के किं-किं-द्रव्यवृत्तयश्चेत्युच्यते।

रूप-रस-गन्ध-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-

१. स्वस्यात्यन्ताभावेन समानम् अधिकरणं यस्य स इत्यर्थः। यथा— शब्दो यदा किञ्चिद्देशावच्छेदेनाकाशे तिष्ठति तदान्यदेशावच्छेदेन तदभावोऽप्याकाशेऽस्ति। एवमन्ये।

परत्वापरत्वानि गुरुत्व-द्रवत्व वेगाश्चेति पृथिव्यां चतुर्दश।

गन्धहीनाः स्नेहयुताश्चैते एव चतुर्दश जले।

रूप-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग परत्वापरत्वानि वेगो द्रवत्वं चेत्येकादश तेजसो गुणाः।

स्पर्शादयोऽष्टौ वेगाख्यः संस्कारश्चेति नव वायुगताः गुणाः।

सङ्ख्यादि पञ्चकं शब्दश्चेति षडाकाशे।

सङ्ख्यादि पञ्चकं काले दिशि च।

बुद्धि-सुख-दुःखेच्छा-द्वेष-यत्न-धर्माऽधर्माः सङ्ख्यादिपञ्चकं भावनाख्यः संस्कारश्चेति चतुर्दशात्मनि।

सङ्ख्यादि पञ्चकं बुद्धिरिच्छा यत्नश्चेतीश्वरेऽष्टौ।

सङ्ख्यादि पञ्चकं परत्वाऽपरत्वे वेगश्चेत्यष्टौ मनसि, इति।

अथ प्रत्येकलक्षणं परीक्षा च—

चक्षुर्ग्राह्यो गुणो रूपम्।

रूपं गुणश्चक्षुषैव गृह्यते। चक्षुर्ग्राह्योऽपि संयोगादिस्त्वचापि गृह्यते इति न चक्षुर्मात्रग्राह्यो गुणः, चक्षुर्मात्रग्राह्यमपि रूपत्वं रूपाभावो वा न गुणः। रूपं हि चक्षुर्मात्रग्राह्यं गुणश्चेति। किञ्च लक्षणे गुणशब्दो विशेषगुणपरस्तेन प्रभाघटसंयोगस्य चक्षुर्मात्रग्राह्यगुणत्वेऽपि विशेषगुणत्वाभावान्न दोषः। द्रव्य-गुण-कर्मणां सामान्यस्य च चाक्षुषप्रत्यक्षे रूपं कारणम्। तच्चक्षुषः सहकारि। नारूपं चक्षुर्ग्राह्यं किञ्चित्।

शुक्लादिकमनेकधा।

शुक्ल-नील-पीत-रक्त-हरित-कपिश-चित्रभेदात्सप्तविधं रूपम्। तद्विशेष-परिधानं च लोके प्रख्यातम्। अथ चित्रे विचारः—

एकद्रव्याश्रितं शुक्लाद्येव चित्रं कथं तद्रूपान्तरं स्यात्। उच्यते—शुक्ल-नील-पीताद्यवयवैरारब्धोऽवयवी पटादिर्नीरूपस्तथा सति न स्यात्तस्य प्रत्यक्षम्। शुक्ल-नील-पीतादिरूपमेव तत्र तत्रोत्पन्नमिति न साम्प्रतम्। रूपं हि व्याप्यवृत्ति गुण इति पीताद्यवच्छेदेनापि शुक्लादय उपलभ्येरन्। न चैवोपलभ्यन्ते। अव्याप्यवृत्तितयोत्पद्यन्तां ते इति व्याहतं वच, स्वभावतस्ते व्याप्यवृत्तयो यतः। न हि स्वभावमपहाय वर्तते भावः। ततो नानाजातीयरूपैरवयविनि विजातीयमेव रूपमारभ्यते। तदेव चित्रमुच्यते। ततश्चैव एकं चित्रमित्युपपद्यते प्रतीतिः।

## पृथिवीजलतेजोवृत्ति, उद्भूतमनुद्भूतं च।

पृथिव्यां नानाविधम्। अभास्वरशुक्लं जले, भास्वरशुक्लं तेजसि। कालिन्दीजले नीलत्वोपलब्धिराश्रयौपाधिकी भ्रान्तिरुक्ता। आकाशे दूरत्वनिमित्ता नीलिमोपलब्धिरपि भ्रान्तिः[1]। उद्भूतमुत्कटं गृह्यते चक्षुषा। अनुद्भूतमनुत्कटं न गृह्यते। रूपं नित्यमनित्यं च। जल तेजः परमाणुषु नित्यम्। पृथिवीपरमाणुषु पाकप्रवृत्तेः, ततोऽनित्यम्। घटपटादौ चानित्यम्। कारण-गुणपूर्वकमुत्पद्यते। आश्रयनाशाच्च नश्यति।

## रसनाग्राह्यो गुणो रसः।

रासनप्रत्यक्षविषयो जीवन-पुष्टि-बलारोग्यनिमित्तं चायं गुणः। पृथिवी-जलवृत्तिः। सोऽयं मधुराम्ल-लवण-कटु-तिक्त-कषायभेदात् षड्विधः। मधुरः शर्करादौ, आम्ल आम्र-जम्बीरफलादौ, लवणः सैन्धवादौ, कटुर्मरिचादौ, तिक्तो निम्बादौ। पृथिव्यां षड्विधो जले मधुर एवेत्युक्तम्। रूपवन्नित्यो-

१ रूपमिति शेषः।

ऽनित्यश्च । जलीय-परमाणुषु नित्योऽन्यत्र सर्वोऽनित्यः। पृथिवी-परमाणुषु पाकात्परिवर्तते तत सोऽप्यनित्यः ।

## घ्राणग्राह्यो गुणो गन्धः पृथिवीमात्रवृत्तिः ।

सुरभिरसुरभिश्चेति द्विविधः । जले तु पृथिव्याश्रयेणैव गन्धप्रतीतिः क्वचित् । वायौ चापि तथा । सर्वो गन्धोऽनित्यः । पार्थिव-परमाणुष्वपि पाकपरिवर्ती । अन्यत्राश्रय-नाशाद् विनश्यति ।

## त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः ।

मात्रपदेन सङ्ख्यादौ नातिव्याप्तिः, ते चक्षुषापि गृह्यन्ते, नायं तथा । केवलं त्वचैव गृह्यतेऽयम् । ग्राह्यत्व=प्रत्यक्ष-विषयत्वम् । त्रिविधः स्पर्शः शीत उष्णोऽनुष्णाशीतश्च । पृथिवी-जल-तेजो-वायुवृत्तिः । तत्र शीतो जले, उष्णस्तेजसि, अनुष्णाशीतः पृथिवीवाय्वोः । नित्योऽनित्यश्च । पृथिव्यां पाकजोऽनित्यश्च । अन्यत्रापाकजो नित्यगतो नित्योऽनित्यगतोऽनित्यश्च स्पार्शन-प्रत्यक्षे हेतुश्च ।

## एकत्वादिव्यवहारहेतुः सङ्ख्या ।

एकोऽयं घटः, द्वौ शरावौ, त्रीणि फलानि, इत्यादिव्यवहार-हेतुर्गुणः सङ्ख्या, एकत्व द्वित्व त्रित्वमित्यादिरूपा परार्धं पर्यन्ता । नवद्रव्यवृत्तिः । एकत्वं नित्यगतं नित्यमनित्यगतम् अनित्यम् । द्वित्वादयश्च सर्वेऽपेक्षाबुद्धिजन्या अनित्याः । अनेकेषु 'अयमेकोऽयमेकः' इत्याकारा बुद्धिरपेक्षाबुद्धिः । अपेक्षा-बुद्धिनाशाच्च नाशस्तेषां, तत एवोत्पन्नत्वात् ।

## परिमाणं मानव्यवहारकारणम् ।

इदं महद् इदं चाणु इत्यादिमानव्यवहाराऽसाधारणकारण

परिमाणम् । नवद्रव्यवृत्ति । अणु, महत्, दीर्घं, ह्रस्वं चेति चतुर्धा । अणुपरिमाणस्यैव पारिभाषिकी संज्ञा पारिमाण्डल्यमिति । तदपि द्विधा अणु, परमाणु च । अणु परिमाणं द्व्यणुके ऽनित्य च । परमाणुपरिमाणं परमाणुषु नित्यं च । महत्परिमाण चापि द्विधा महत्, परममहच्च । महत् परिमाणं त्रसरेणोरारभ्य घटादिषु सर्वत्र, अनित्यं च । परममहत्परिमाणम् आकाश-काल दिगात्मवृत्ति नित्यं च । कश्चित्तु बिल्वामलकादिषु महत्स्वपि महत्वप्रकर्षाऽपकर्षमपेक्ष्य भाक्तोऽणुत्वव्यवहारः, आमलकमिदमणु बिल्वमिदमणीयः इति च । दीर्घत्वं लम्बता, ह्रस्वत्वं तत्प्रतियोगि खर्वत्वम् । जन्य-महद्गुण-समानाधिकरणे उभे अनित्ये इत्येके । परिमाणे एव ते न भवत इत्यपरे । तयोः परिमाणत्वे महत्सु दीर्घतानीयतामिति वन्महत्सु वर्तुल त्रिकोणं चाऽऽनीयतामित्यादि निर्धारणाद् वर्तुलत्व त्रिकोणत्वादीनामपि पृथक् परिमाणत्वापत्तिः स्यादित्याशयस्तेषाम् ।

सङ्ख्यातः परिमाणाच्च प्रचयादपि जायते ।

अनित्यपरिमाणस्य त्रीणि निमित्तानि, सङ्ख्या परिमाणं प्रचयश्चेति । द्व्यणुकपरिमाणे त्रसरेणुपरिमाणे च सङ्ख्या निमित्तम् । सङ्ख्याजन्यं तदिति भावः । कारणपरिमाणजन्यं कुतो न तत्स्यात् ?, द्व्यणुकपरिमाणजन्यं यदि त्रसरेणुपरिमाणं, परमाणुपरिमाणजन्यं च द्व्यणुकपरिमाणं भवेत् तदा कारणपरिमाण-समानजातीयमुत्कृष्टं च भवेत् । न चास्ति तथा । द्व्यणुकपरिमाणं परमाणुपरिमाणान्नोत्कृष्टम् । अणोरुत्कृष्टमणुतरं

१. परितो मण्डलं=वर्तुलं परिमण्डलं परमाणुर्द्व्यणुको वा तयोर्भावः परिमाणरूप पारिमाण्डल्यमणुपरिमाणमुच्यते ।

२ वामनत्वम् ।

३ दीर्घत्व ह्रस्वत्वे ।

महतो महत्तरं यथा। त्रसरेणु-परिमाणं च न द्व्यणुक-परिमाण-सजातीयं, तद्धि महत्, द्व्यणुकस्य चाणु। परिमाणस्य हि स्वसमान-जातीयोत्कृष्ट-परिमाण-जनकत्वं नियमः। अतः परमाणु-निष्ठा द्वित्वसङ्ख्या द्व्यणुकपरिमाणस्य कारणम्। द्व्यणुकनिष्ठा त्रित्वसङ्ख्या च त्रसरेणु-परिमाणस्य कारणम्।

घटादि-परिमाणं च कपालादि-परिमाण-जन्यमिति परिमाण-जन्यं परिमाणं नवम्। प्रचयजन्यं परिमाणं च तूलादौ[1]। प्रचयः शिथिल-संयोगः, तत्कारणीभूता क्रिया विजननमित्युच्यते। सर्वेषामाश्रयनाशात् परिमाणं विनश्यति।

पृथग्व्यवहाराऽसाधारण-कारणं पृथक्त्वम्।

इदमस्मात्पृथक् पदार्थान्तरमिति व्यवहारस्य यदसाधारणं कारणं तत्पृथक्त्वम्। तन्नित्यमनित्यं चेति द्विधा। नित्यगतं नित्यमनित्यगतमनित्यं सङ्ख्यावत्। इदमस्मात्पृथगिति प्रतीति-रन्योन्याभाव एव किम् स्यात्, न स्यात्पृथक्त्वं गुणान्तरमिति। नेदं साम्प्रतम्—'इदमिदं न भवती'त्यन्योन्याभावाद् विलक्षणा खल्वियं प्रतीतिः "इदमस्मात्पृथगिति"। न शब्दवैलक्षण्यमेव, अस्ति खल्वर्थवैलक्षण्यमपि। अन्यथा 'घटात्पृथक् पट' इति-वत् 'घटो न पट' इत्यत्रापि पञ्चमी स्यात्। सोऽयं नञर्था-ऽन्योऽन्याभावतो भिन्नो यदर्थयोगे पञ्चमी भवति। ततो न पृथक्त्वमन्योऽन्याभाव एवेति।

अप्राप्तयोः प्राप्तिः संयोगः।

पृथक्सिद्धयोरप्राप्तयोर्या प्राप्तिः स संयोगः। अयं त्रि-विधः—अन्यतरक्रियाजन्य उभयक्रियाजन्यः संयोगजन्यश्च

---

१. तूलं=कार्पासम्।

न्योगः। पक्षि-पर्वतसंयोग आद्यः, अन्यतरस्य पक्षिण एव क्रियया जन्यते सः। अभिमुखं प्रसर्पतो र्द्वयोर्मेषयो र्यः संयोगः स द्वितीय उभय-क्रियाजन्यः। हस्त-तरुसंयोगाच्छरीर-तरु संयोगस्तृतीयः संयोगजः संयोगः। अन्यथापि द्विधा संयोगः—अभिघातो नोदनं चेति। अभिघातः शब्दहेतुर्यथा हस्तस्य दण्डादीनां वा सवेगमाघाते। शब्दाऽहेतुर्द्वितीयो नोदनाख्यः संयोगो हस्त-दण्डादीनां संनिधाने।

अथापि केचिद् विभूनाम् आकाश-कालादीनामपि संयोगमाहुर्नित्यश्चासौ संयोग इति चाचक्षते। किन्तु तेषां पृथक्सिद्धताऽभावान्न संयोग इत्येव साम्प्रतम्, पृथक्सिद्धयोरप्राप्तयोर्या प्राप्तिः स संयोग इति संयोग-लक्षणात्। ततो नास्ति नित्यः कश्चित्संयोगः। अवयवाऽवयविनोः कपाल-घटयोस्तन्तु-पटयोर्वा न संयोगस्तयोरयुतसिद्धत्वात्। तथा चोच्यते—युतसिद्धयोः संश्लेषः संयोगः, अयुतसिद्धयोश्च समवायः।

प्राप्ति-पूर्विका अप्राप्तिर्विभागः।

तत एवायं संयोगनाशको गुणः। विभक्त-प्रत्ययकारणं च। संयोगवद्विभागोऽपि त्रिधा—अन्यतरकर्मज उभयकर्मजो विभागजश्च विभाग इति। पक्षि-पर्वत-विभाग आद्यः, पक्षिण्येव यतः कर्म। द्वयोर्मेषयोरपसर्पणे द्वितीय उभयकर्मजः। हस्त-तरु-विभागाच्छरीर-तरु-विभागस्तृतीयो विभागजो विभागः। यथा विभागेन संयोगो नश्यति, तथा पुनःसंयोगेन विभागो नश्यति। आश्रय-नाशादुभय-नाशो भवत्येव।

---

१ प्रकारान्तरेणापीत्यर्थः।

२. अयुतसिद्धत्वात् = अपृथक् सिद्धत्वात्।

३ युतसिद्धयोः = पृथक्सिद्धयोः।

४. अयुतसिद्धयोः = अपृथक्सिद्धयोरित्यर्थः।

## परापर-व्यवहारहेतू परत्वाऽपरत्वे ।

अयमस्मात्परोऽयं चापर इत्यात्मक-व्यवहारहेतुः परत्वम-परत्वं च मूर्त्त-द्रव्यवृत्ति । तदुभयमिदं द्विविधं—दिक्कृतम् कालकृतं च । तत्र दिग्-विशेष-प्रत्यायकं दिक्कृतम् । एकस्यां दिश्यवस्थितयोर्द्वयोर्मूर्तद्रव्ययो र्यस्य द्रष्टुर्यदपेक्षया यद् दूरस्थं तत्र परत्वम् । यत्र समीपस्थ तत्रापरत्वम् । कालकृतं च वयोभेद-प्रत्यायकम्, अपेक्षा-निमित्तं च । युवानमपेक्ष्य स्थविरः परः, अपरश्च युवा स्थविरमपेक्ष्य । कालकृत-परत्वमपरत्वमेव ज्येष्ठत्वं कनिष्ठत्वं चोच्यते । दिवाकर-परिस्पन्द-भूयस्त्वाऽल्पत्व-ज्ञानकृता चात्राऽपेक्षा । अपेक्षाबुद्धिनाशाच्च नाशः सर्वेषां परत्वाऽपरत्वानाम् ।

## आद्य-पतनाऽसमवायि-कारणं गुरुत्वम् ।

पृथिवी-जलवृत्ति । अतीन्द्रियं च । नित्यमनित्यमिति द्विधा-नित्यगतं नित्यमनित्यगतमनित्यम् । "वायौ चापि गुरुत्वमस्ति" इति नवीना विज्ञानिनः, चर्म-कन्दुकादौ वायुपूरणे कृते गुरुत्वानुभवानुरोधादिति तेषां हेतुवचनम् । वायुगत-पार्थिवपरमाणु-गुरुत्वमेव तत्रानुभूयते न वायौ गुरुत्वमिति प्राचीनानुयायिनः ।

## आद्य-स्यन्दनाऽसमवायि-कारणं द्रवत्वम् ।

पृथिवी-जल-तेजोवृत्ति । सांसिद्धिकं नैमित्तिकं चेति द्विविधम् । सांसिद्धिकं स्वाभाविकं जलमात्रवृत्ति । निमित्तविशेषाज्जातं नैमित्तिकं पृथिवी-तेजसोः, यथाऽग्निसंयोगाद् घृतादौ पृथिव्यां, सुवर्णादिरूपे तेजसि च । द्रवत्वमिदं जलीयपरमाणुषु नित्यमन्यत्र सर्वत्राऽनित्यम् । स्नेहसहितं संग्रहेऽपि हेतुर्यथा सक्तुकादौ ।

१. वयः=अवस्था, युव-स्थविरत्वादिका ।

२ दिक्कृतं चाप्यपेक्षा-निमित्तम् ।

## चूर्णादि-पिण्डीभाव-हेतुर्गुणः स्नेहः ।

जलमात्रवृत्तिः । घृत-तैलादिरूपायां पृथिव्यामपि स्नेहो जलस्यैव, तत्र तस्य दहनानुकूल्यं चापि तत्प्रकर्षादेव । अपकृष्ट-स्नेहस्य प्रत्युत दहनस्य प्रतिकूलः, अत एवापकृष्टस्नेहं जलं वह्निं शमयति । नित्योऽनित्यश्च, नित्यगतो नित्योऽनित्यगतोऽनित्यः ।

## श्रोत्र-ग्राह्यो गुणः शब्दः ।

आकाशेऽव्याप्यवृत्तिः शब्दः । यदा किञ्चिदवच्छेदेनाकाशे उत्पद्यते शब्दस्तदाऽन्यावच्छेदेन शब्दाभावोऽपि वर्तते आकाशे, ततोऽव्याप्यवृत्तिः । शब्दो द्विधा—ध्वन्यात्मको वर्णात्मकश्च । ध्वन्यात्मको भेर्यादौ, वर्णात्मकोऽकारककारादि-संस्कृत-प्राकृत-भाषादिरूपः । सर्वः शब्दोऽनित्यः, अन्तःप्रेरितवायु-कण्ठादि-संयोगजन्यो वर्णात्मा, भेरीदण्डसंयोगादिजन्यो ध्वन्यात्मा । क्षणिकश्च, उत्तरशब्दात्पूर्वो नश्यति, श्रोत्रोत्पन्नश्च गृह्यते । सेयमस्योत्पत्तिर्वीचि-तरङ्गसन्तानवत् कदम्बगोलकवद् वा । वीचिभ्यस्तरङ्गास्तरङ्गेभ्यो वीचयस्तद्वत्पूर्वशब्दादुत्तरः शब्द इति शब्दसन्तानः । यथा वा कदम्बपुष्प-गोलके दशदिक्षु पत्र-परम्परा तद्वच्छब्दाद्दशदिक्षु दश शब्दा उत्पद्यन्ते,ततश्चान्ये दशेति परम्परा । श्रोत्रदेशे उत्पन्नो गृह्यते इत्युक्तम् । एवमुत्पाद-विनाश-शालितया अनित्यः शब्दः । तथा च भवति प्रतीतिः—'उत्पन्नः कः' 'विनष्टः खः' इति च । 'सोऽयं कः' 'सोऽयं गः' इत्यादिप्रत्यभिज्ञास्तु साजात्य-विषयास्तदेवौषधमित्यादिवत्; न तस्य नित्यत्वं साधयितुमीशते ।

---

१. स्वात्यन्ताभाव-समानाधिकरणोऽव्याप्यवृत्तिः ।

अन्ये[1] एतदनित्य-शब्दव्यङ्ग्यं सदसमेकं स्फोटाख्यं शब्दं मन्यन्ते, अनित्य-शब्दाभिव्यक्ताद् यतोऽर्थः प्रतीयते, अन्यथा वर्णानामुत्पत्तिक्रमेण क्रमशो विनाशे कथं पदार्थों वा वाक्यार्थो वा अवबुद्धयेत। सोऽयं स्फोटाख्यो नित्यः शब्दोऽवश्यमभ्युपेय इति तेषामाशयः। तत्र, पूर्वपूर्व-वर्णानुभवैः संस्काराः जन्यन्ते, तत्सहितेन च चरम-वर्ण-विज्ञानेन स्मृत्यारूढानि पदान्येव सङ्केत-बलेनार्थान् बोधयिष्यन्तीति नार्थः स्फोटेन।

## बुद्धिर्ज्ञानम्, आत्मगुणः, सर्व-व्यवहारहेतुश्च।

मनसा इतरैश्चेन्द्रियैर्जानाति चेतन आत्मा सर्वमिति बुद्धिर्ज्ञानमात्मगुणः। पूर्वं जानाति अथ व्यवहरतीति ज्ञानपूर्वकाः सर्वे व्यवहाराः प्रवर्तन्ते, ततः सर्व-व्यवहारहेतुत्वं बुद्धेः। स्मृतिरनुभूतिश्चेति द्विविधा बुद्धिः।

## संस्कारमात्र-जन्यं ज्ञानं स्मृतिः।

स्मृतौ पूर्वानुभवः कारणम्। यदनुभवति तदेव स्मरति, अननुभूतं न स्मरन् दृष्टः कश्चित्। अनुभवात्संस्कारः संस्काराच्चोद्बुद्धात्स्मृतिरिति संस्कारोऽसाधारण-कारणं स्मृतेः। अनुभवस्तूत्पद्य तदैव क्षणान्तरे विनष्टः कथं कालान्तरे स्मृतिं जनयेदिति, तज्जनितः संस्कार आत्मनि स्थितः कुतोऽपि हेतोरुद्बुद्धः स्मृतिं जनयति। प्रणिधान-सादृश्य-सम्बन्धादयश्च संस्कारस्योद्बोधका इति तेऽपि स्मृतिहेतव उच्यन्ते। प्रणिधानात्—स्मरणेच्छया मनस एकाग्रीकरणं प्रणिधानं तेन संस्कारोद्बोधः। सादृश्यात्—यथा देवदत्त-चित्रदर्शनेनोद्बुद्धसंस्कारो मैत्रो देवदत्तं स्मरति। सम्बन्धात्—अन्तेवासि-

---

१. वैयाकरणाः।

सम्बन्धाद् गुरुं स्मरति, पित्रा वा पुत्रम्। संस्कारमान्द्यात्स्मृतिमान्द्यम्। संस्कारनाशाच्च स्मृत्यभावः।

अथ स्वप्नः।

यथैव पूर्वसंस्कारात्स्मृतिरुत्पद्यते तथा स्वप्नोऽपि। कः पुनरत्र विशेषः? निद्रादोष इति गृहाण। त्रिधा स्वप्नः—संस्कारपाटवाद्, धातुदोषाद्, अदृष्टाच्च। तत्र संस्कारपाटवात् कामी क्रुद्धो वा यमर्थमादृतश्चिन्तयन् स्वपिति तामेव कामिनीं शत्रुं वा स्वकीयस्वप्ने पश्यति। धातूनां वातपित्तश्लेष्मणां दोषात्तज्जन्योऽपि स्वप्नो भवति। वातदोषाच्च सुप्त आकाशे विचरति वसुन्धरां पर्यटति, सिंहादिभ्यो वा हिंस्रजन्तुभ्यो बिभेति। पित्तदोषात्प्रविशत्यग्निम्, आलिङ्गति ज्वालाम्, काञ्चनपर्वतं विद्युत्स्फुरणादिकं चोपलभते। श्लेष्मदोषात्तथा सन्तरति, समुद्रं पश्यति धारासम्पातं राजतं वा शिलोच्चयम्।

अदृष्टाच्च धर्माधर्मरूपात् स्वयमनुभूतेष्वननुभूतेषु च प्रसिद्धाऽप्रसिद्धेषु शुभाऽशुभावेदकं गजारोहण-छत्रलाभादिकं तैलाभ्यङ्ग-खरारोहणादिकं च पश्यति। सर्वत्र संस्कारः कारणं, न हि जन्मान्धः स्वप्ने रूपं रूपवतो वा पदार्थान् पश्यति। स्वप्नोऽयं न स्मृतिः, किन्तु संस्कारजन्यतया स्मृतिसदृशमिदं ज्ञानम्। जाग्रदवस्थायां पुरुषो यत् किञ्चन पश्यति शृणोति जिघ्रति स्पृशति रसयते वा, तज्जनितसंस्कारवशात्सुप्तो निद्रादोषोपनीतान् तान् तथाविधानेव प्रतीतिमात्रशरीरान् विषयान् पश्यति शृणोति जिघ्रति स्पृशति रसयते वेत्ति, उत्थितश्च परामृशति—सुप्तोऽहमद्य प्रासादमपूर्वमपश्यम्, शब्दांश्च मनो-

---

१ निद्रादोषे सति पूर्वसंस्कारात्स्वप्नो जायते। जाग्रदवस्थायां स्मृतिरेव न स्वप्नः।

रमानश्रवणम्, अस्माकं मन्दशीतलं समीरणम्, दिव्यानि पुष्पाण्यजिघ्रम्, अभक्षयं च परमस्वादूनि भोजनानीति।

## अनुभूतिर्द्विधा अप्रमा च प्रमा चेति।

अनुभूतिरनुभवः। अप्रमा अयथार्थानुभवः। यथार्थानुभवश्च प्रमा। तत्र अतस्मिन् तद्बुद्धिरप्रमा, दोषाधीना। पित्तदोषोपहत-चक्षुः श्वेतमपि शङ्खं पीतं पश्यति। दूरत्व-दोषाच्च शुक्तिकां रजतं पश्यति। अप्रमा सेयं द्विविधा—भ्रान्तिः संशयश्चेति। भ्रान्तिरेव विपर्ययो भ्रमो विपर्यासश्चेत्युच्यते, तदुदाहरणं देहे आत्मबुद्धिः, शङ्खादौ पीतत्वबुद्धिः, शुक्तिकादौ रजतबुद्धिश्च। संशय एकस्मिन्ननेककोटिकं ज्ञानम्। यथा—स्थाणुर्वा पुरुषो वेति। स्थाणु-पुरुषयोः साधारणधर्ममुच्चैस्तरत्वं दृष्ट्वा दूराद् भवति संशयः स्थाणुर्वा पुरुषो वेति। तत्र साधारण-धर्मज्ञानं संशय-कारणम्।

## तद्वति तत्प्रकारकं ज्ञानं प्रमा।

यथा घटे घटोऽयमिति। घटत्ववति तस्मिन् घटत्वप्रकारकं हि तज्ज्ञानम्। तदिदमदुष्ट=दोषानधीनम्। निर्विकल्पकं सविकल्पकं च तत्। निर्विकल्पकं सामान्यतो यथा—इदं किञ्चिदिति सम्मुख-वस्तुमात्रालोचनम्। विशेषतः सविकल्प-कम्, यथा—तत्रैव घटोऽयं पटोऽयमित्याकारकम्। तत एवो-च्यते—प्रकारतादिशून्यं निर्विकल्पकम्। तत्सहितं च सवि-

१. तस्मिन्=घटे।

२. विशेषणं घटत्वादिकं प्रकार इत्युच्यते। घटत्वं प्रकारो यत्र तज्ज्ञानं घटत्वप्रकारकम्।

३. तत्=प्रमात्मकं ज्ञानं निर्विकल्पक-सविकल्पकभेदेन द्विविधमित्यर्थः।

४. प्रकारता=विशेषणता, आदिशब्देन विशेष्यता संसर्गता च।

कल्पकम् । प्रकारो विशेषणं तद्भावः प्रकारता, एवं विशेष्यता । प्रथमतो हि घट-घटत्वयोः सम्बन्धानवगाहि ज्ञानं जायते । तदिदं निर्विकल्पकम् इदं किञ्चिदित्यादिरूपमुक्तम् । अनन्तरं च तयोः सम्बन्धं विषयीकुर्वद् यद् ज्ञानं जायते घटोऽयमिति, सविकल्पकं तदुक्तम् ।

## प्रत्यक्षमनुमितिरुपमितिः शाब्दश्चेति चतुर्धा प्रमा ।

प्रमा-करणं प्रमाणं तदपि चतुर्विधम् । प्रत्यक्षमनुमानमुपमानं शाब्दश्चेति । अथ किमिदं करणम् ? । असाधारणं कारणं करणम् । कारणं च कार्यनियत पूर्ववृत्ति=कार्यं प्रति नियतं पूर्ववृत्ति चेत्यर्थः । क्रियते यत् तत्कार्यं प्रागभाव प्रतियोगि । यस्याभावः स प्रतियोगी घटस्य प्रागभाव इति घटः प्रतियोगी, कार्यं च ।

## कारणं त्रिधा ।

समवायिकारणम् असमवायिकारणं निमित्तकारणं च । यत्समवेतं[1] कार्यमुत्पद्यते समवायिकारणं तत् । यथा तन्तवः पटस्य, तन्तुषु समवेतः पट उत्पद्यते । पटश्च स्वगतरूपस्य समवायिकारणं, पटे रूपं समवेतं सदुत्पद्यते यतः । समवायिकारणे प्रत्यासन्नं सद् यत्[2] कार्यं जनयति तदसमवायिकारणम् । यथा तन्तुसंयोग पटस्य, समवायिकारणे तन्तुषु समवायेन प्रत्यासन्नो हि तन्तुसंयोग पटमुपजनयति । यथा वा तन्तुरूपं पटरूपस्य, पटरूपस्य समवायिकारणं पटस्तत्र तन्तुरूपं स्वसमवायिसमवायसम्बन्धेन प्रत्यासन्नं सत् पटरूपं जनयति । स्वं-तन्तुरूपं तत्समवायि तन्तवस्तत्र समवायः पटस्येति । सम

१ यत्र समवायेन विद्यमानमित्यर्थः ।

२. यत्=कारणम् ।

यायि-कारणाऽसमवायि-कारणाभ्यां भिन्नं कारणं निमित्तकारणम् यथा—तुरी-वेम तन्तुवायादयः पटस्य, दण्ड-चक्र-कुलालादयश्च घटस्य ।

तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तत्करणम् । असाधारणत्वं च व्यापारवत्त्वम् । व्यापारत्वं नाम तज्जन्यत्वे सति तज्जन्य-जनकत्वम् । दण्डजन्यत्वं दण्डजन्य-घटजनकत्वं च भ्रम्यादेरस्तीति सिद्धं भ्रम्यादेर्व्यापारत्वम् । भ्रम्यादि-व्यापारवद्दण्डादि घटादिकं प्रति करणमिति ।

## अथ प्रत्यक्ष-प्रमा

**इन्द्रियार्थ-सन्निकर्षोत्पन्नं ज्ञानं प्रत्यक्षमव्यपदेश्यम-व्यभिचारि व्यवसायात्मकं च तत् ।**

इन्द्रियार्थयोः सन्निकर्षेण जन्यम् । (सन्निकर्षः सम्बन्धः) । व्यपदेश्यं=शाब्दबोधात्मकं न भवतीत्यव्यपदेश्यम्, व्यभि-चारि=भ्रमात्मकं न भवतीत्यव्यभिचारि, व्यवसायात्मकं=निश्चयात्मकम्, संशयो न निश्चयात्मक इति तद्व्युदासः । तथा चेन्द्रियैरर्थग्रहणे निरुक्तलक्षणं[1] प्रत्यक्षमिति ।

चाक्षुषं घ्राणजं रासनं त्वाचं श्रौत्रं मानसं चेति षड्विधं प्रत्यक्षम् । ईश्वरप्रत्यक्षं च नित्यं न जन्यम् । नात्र तत्प्रसङ्गो जन्यं हि निरूप्यते । तत्र चाक्षुषं चक्षुरिन्द्रिय-संनिकर्ष-जन्यम्, तद्विषयाः—उद्भूतरूपम् उद्भूतरूपवद्द्रव्यं पृथक्त्व-सङ्ख्ये

---

१. निरुक्त=पूर्वोक्तं लक्षणं यस्य तदित्यर्थः । तथा च यद् ज्ञानं शाब्दबोधात्मकं नास्ति भ्रमात्मकं च नास्ति निश्चयात्मकम् इन्द्रियार्थसन्निकर्षोत्पन्नं चास्ति तत् प्रत्यक्षम् ।

संयोग-विभागौ परत्वापरत्वे द्रवत्वं परिमाणं योग्यवृत्तिः क्रिया जातिः समवायश्च। उद्भूतरूपम् आलोकसंयोगश्च सर्वत्र चाक्षुषप्रत्यक्षे हेतुः। अत एवोद्भूतरूपाभावेनोष्मादेर्न चाक्षुषं प्रत्यक्षम्। नाप्यन्धकारे भवति चाक्षुषम्। घ्राणेन्द्रियसन्निकर्षजन्यं घ्राणजम्। तद्विषयो गन्धो गन्धत्वं गन्धाभावश्च। 'येनेन्द्रियेण यद् गृह्यते तन्निष्ठा जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते' इति हि न्यायविदां नयः। अन्यत्राप्येवं तत्तज्जातिस्तत्तदभावश्च तत्तदिन्द्रियेण गृह्यते। रसनेन्द्रियसन्निकर्षजन्यं रासनं तद्विषयो रसो रसत्वं रसाभावश्च। त्वगिन्द्रियसन्निकर्षजन्यं त्वाचम्, तद्विषयः स्पर्शः स्पर्शत्वादिसहितः स्पर्शवद्द्रव्यं च, रूप-रूपत्वाद्यतिरिक्तं यच्चक्षुषा गृह्यते त्वचोऽपि तद् ग्राह्यम्। श्रौत्रं श्रोत्रेन्द्रियसन्निकर्षजन्यं तद्विषयः शब्दः शब्दत्वं शब्दाभावश्च। मन इन्द्रियसन्निकर्षजन्यं मानसं प्रत्यक्षम्, तद्विषयाश्च सुख-दुःखे इच्छा-द्वेषौ बुद्धिर्यत्नश्च, एषामभावो जातिश्चैतन्निष्ठा, सुखाद्याश्रय आत्मा चापि मनोग्राह्यः। सर्वं ज्ञानम् मनोजन्यं कुतो न मानसमुच्यते? यत्र हि मन इन्द्रियत्वेन हेतुस्तदेव मानसं सुखदुःखादिज्ञानम्। अन्यत्र तु मनस्त्वेन तद्धेतुः। ततो न सर्वं मानसम्।

षड्विधेऽपि प्रत्यक्षे महत्त्वं हेतुः सम्बन्धभेदात्,
इन्द्रियं च करणम्।

द्रव्यप्रत्यक्षे महत्त्वं समवायेन हेतुः, द्रव्ये महत्त्वस्य गुणस्य समवायात्। द्रव्यसमवेतानां गुण-कर्म-सामान्यानां प्रत्यक्षे महत्त्वं स्वाश्रय-समवायेन हेतुः, स महत्त्वं तदाश्रयो द्रव्यं तत्र समवायो गुणादीनाम्। द्रव्य समवेत-समवेत गुणत्व-कर्मत्वा-

दीनां प्रत्यक्षे स्वाश्रय-समवेत-समवायेन हेतुः, स्वं महत्त्वं तदाश्रयो द्रव्यं तत्र समवेतो गुणादिस्तत्र समवायो गुणत्वादीनाम्। सर्वत्र प्रत्यक्षे इन्द्रियं करणं ततः प्रत्यक्ष-प्रमाकरणमिन्द्रियं प्रत्यक्षप्रमाणमुच्यते।

## योऽयमिन्द्रिय-सन्निकर्षः प्रत्यक्षहेतुः, षड्विधः सः।

१ संयोगः। २ संयुक्त-समवायः। ३ संयुक्त-समवेत-समवायः। ४ समवायः। ५ समवेत-समवायः। ६ विशेषण-विशेष्य-भावश्च षष्ठः। तत्रोदाहरणानि—घटादिप्रत्यक्षे संयोगः सन्निकर्षः, घटस्य पृथिवीत्वात् चक्षुषश्च तैजसत्वादुभयोर्द्रव्ययोः सम्बन्धः संयोगः। घटादिरूप-प्रत्यक्षे संयुक्तसमवायः, चक्षुः संयुक्तो घटस्तत्र रूपस्य (गुणस्य) समवायात्। रूपत्वप्रत्यक्षे संयुक्त-समवेत-समवायः सन्निकर्षः, चक्षुःसंयुक्ते घटे रूपं समवेतं तत्र रूपत्वस्य (जातेः) समवायात्। श्रोत्रेण शब्द-प्रत्यक्षे समवायः सन्निकर्षः, आकाशं हि कर्णविवरवर्ति श्रोत्रं तत्र शब्दस्याकाशगुणस्य समवायः, गुण-गुणिनोर्हि भवति समवायः। शब्दत्वप्रत्यक्षे समवेत-समवायः सन्निकर्षः, श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्। अभावानां प्रत्यक्षे च विशेषण विशेष्य-भावः सन्निकर्षः, घटाभाववद् भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावो विशेषणमिति चक्षु संयुक्त-विशेषणता सन्निकर्षः।

## योगिप्रत्यक्षं च न लौकिकम्।

योगिप्रत्यक्षमलौकिकम्, योगसमाधिजन्य-सामर्थ्य रूपोऽलौकिक एव तत्र सन्निकर्षो योगजः। येन पश्यति योगी भूतं भविष्यन्तं वर्तमानं च विप्रकृष्ट व्यवहितं सूक्ष्मातिसूक्ष्मं च सर्वम्।

इति प्रत्यक्षखण्डः।

## (अनुमानम्)

**द्वितीयाऽनुमितिः प्रमा परामर्श-जन्या, प्रत्यक्षपूर्विका च ।**

परामर्शजन्यं ज्ञानमनुमितिः, प्रत्यक्षपूर्विका च सा, न हि लिङ्गलिङ्गिनोः सम्बन्ध-प्रत्यक्षं विना जायते काप्यनुमितिः । लिङ्गं हेतुः, लिङ्गि साध्यम् । परामर्शश्च व्याप्ति-विशिष्ट-पक्षधर्मता ज्ञानम्[1] । यथा पर्वतो वह्निमानित्यत्र 'वह्निव्याप्यधूमवान् पर्वत' इति ज्ञानं परामर्शः । तदित्थम् अनुमितौ व्याप्तिज्ञानं करणं परामर्शो व्यापारः,— व्याप्तिज्ञानजन्यो व्याप्तिज्ञान-जन्यानुमिति-जनकश्च यतः । तथाहि—महानसादौ लिङ्गलिङ्गिनोर्गृहीतव्याप्तिसम्बन्धो देवदत्तः कदाचित् पर्वतेऽविच्छिन्नमूलां धूमलेखां दृष्ट्वा यत्र धूमस्तत्र वह्निरिति व्याप्तिं स्मरति, अथ वह्नि-व्याप्यधूमवान् पर्वत इति परामृशति, ततः पर्वतो वह्निमानित्यनुमिनोति । अत्र धूमो हेतुर्वह्निः साध्यम् । यत्र धूमस्तत्र वह्निरिति व्याप्तिः । वह्निव्याप्तिविशिष्टो धूमो व्याप्यस्तस्य पर्वत-वृत्तित्वज्ञानं पक्षधर्मताज्ञानं स परामर्शः । ततो यत् "पर्वतो वह्निमानिति" ज्ञानमुत्पद्यते सानुमितिः फलम् । व्याप्ति-ज्ञानमनुमितिकरणमिति व्याप्ति-ज्ञानमनुमानं प्रमाणम् ।

### स्वार्थं परार्थं च ।

तदिदमनुमानं स्वार्थं परार्थं चेति द्वेधा । स्वार्थं स्वानुमिति-हेतुः, यथा स्वयं वह्निधूमयोः सहचारस्य भूयोदर्शनेन गृहीत-व्याप्तिकः कश्चित् पर्वते धूमं दृष्ट्वा व्याप्तिं स्मरन् वह्निव्याप्य-धूमं च परामृशन् 'वह्निमान् पर्वत' इत्यनुमिनोति ।

---

१. साध्यव्याप्ति-विशिष्टस्य हेतोः पक्षवृत्तित्वज्ञानमित्यर्थः ।

परार्थं परानुमितिहेतुः, यत्र स्वयं धूमाद् वह्निमनुमाय परं प्रतिबोधयितुं पञ्चावयववाक्यं प्रयुङ्क्ते तत्र परार्थानुमानम्। यथा—पर्वतो वह्निमान्। धूमवत्त्वात्। यो धूमवान् स वह्निमान् यथा महानसः। तथा चायम्। तस्मात्तथा। इति पञ्चावयववाक्येन परोऽपि वह्निं प्रतिपद्यते।

**प्रतिज्ञा-हेतुरुदाहरणमुपनयो निगमनं चेति पञ्चावयवाः।**

तत्र साध्यनिर्देशः प्रतिज्ञा, पक्षे साध्यस्य निर्देशः कथनं, साध्यविशिष्ट-पक्षबोधक-वचनमित्यर्थः, यथा—पर्वतो वह्निमानिति। उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः, दृष्टान्तसादृश्यात् साध्यसाधकवचनमित्यर्थः, यथा धूमवत्त्वादिति, यद् धूमवत् तद् वह्निमद् दृष्टम्, वैधर्म्याच्च, उदाहरणवैधर्म्याच्चापि साध्यसाधकवचनं हेतुः, यद् वह्न्यभाववत् तद् धूमाभाववद् दृष्टम्। व्याप्तिप्रतिपादक-दृष्टान्तवचनमुदाहरणम्, साधर्म्याद् वैधर्म्याच्च, यो धूमवान् स वह्निमान् यथा महानसः, यो वह्न्यभाववान् स धूमाभाववान् यथा ह्रदः। उदाहरणापेक्षस्तथेति न तथेति वा पक्षस्योपनयो हेतूपसंहारः, यथा धूमवान् महानसो वह्निमान्। तथा चायं पर्वत इत्यत्र तथा चायमिति वचनमुपनयः, इदं साधर्म्यस्थले, वैधर्म्यस्थले तु यो न वह्निमान् स न धूमवान् यथा ह्रदः, अयं च न तथेति वचनमुपनयः। उपनयस्थं हेतुनिर्देशमाश्रित्य प्रतिज्ञायाः पुनर्वचनं साध्योपसंहारो निगमनम्, तस्मात्तथेति वचनम्।

तथा च १ पर्वतो वह्निमान्। २ धूमात्। ३ यो यो धूमवान् स स वह्निमान् यथा महानसः। ४ तथाचायम्। ५ तस्मात्तथा। इति पञ्चावयववाक्ये तस्मात्तथेति प्रतिज्ञायाः पुनर्वचनमेव निग-

नम्। उपनयेन हेतूपसंहारः कृतस्तदनन्तरं साध्योपसंहारोऽप्यावश्यकः सोऽयं निगमनेन क्रियते। साध्योपसंहारश्च प्रतिज्ञायाः पुनर्वचनमेवेति सुष्ठूक्तं प्रतिज्ञायाः पुनर्वचनं निगमनमिति।

## अवयवानां प्रयोजनं चोपदिश्यते—

साध्यस्य पक्षेण सह सम्बन्धोपपादनं प्रतिज्ञार्थः। साध्यस्य सत्त्वोपपादनं हेत्वर्थः। साध्यसाधनयोरेकत्र साध्यसाधनभावप्रतिपादनमुदाहरणार्थः। साध्यविशिष्टे पक्षे हेतोः सत्त्वप्रतिपादनमुपनयार्थः। पक्षे विपरीत-प्रसङ्गवारणं निगमनार्थः।

परामर्शजन्यं ज्ञानमनुमितिः परामर्शश्च व्याप्तिविशिष्टपक्षधर्मता ज्ञानमित्युक्तम्, तत्र का व्याप्तिरित्युच्यते—

## साहचर्य-नियमो व्याप्तिः

नियत-साहचर्यमित्यर्थः। नियतत्वं व्यापकत्वम्। साहचर्यं सहचरभाव=सामानाधिकरण्यम्, साहचर्यं द्वेधा—अन्वयेन व्यतिरेकेण च। तत्सत्वे तत्सत्त्वमन्वय-साहचर्यम्। तदभावे तदभावो व्यतिरेक-साहचर्यम् तद्वशा व्याप्तिरपि द्विविधा—अन्वयव्याप्तिर्व्यतिरेकव्याप्तिश्च। यत्र यत्र धूमस्तत्र तत्र वह्निरिति धूमनियत-वह्निसामानाधिकरण्यमन्वयव्याप्तिः। अयं भावः—हेत्वधिकरण-वृत्त्यभावाऽप्रतियोगिना साध्येन हेतोः सामानाधिकरण्यमिति, यथा पर्वतो वह्निमानित्यत्र हेतुर्धूम., तदधिकरणं महानसादि तद्वृत्तिरभावो घटाभावः पटाभावो वा (न कदापि वह्न्यभावः) तदप्रतियोगि-साध्य वह्निस्तेन हेतोर्धूमस्य सामानाधिकरण्यमन्वयव्याप्तिः।

यत्र वह्निर्नास्ति तत्र धूमो नास्तीति साध्याभाव-व्यापकीभूताभाव-प्रतियोगित्वं व्यतिरेकव्याप्तिः। यथा पर्वतो वह्निमानित्यत्रैव साध्यं वह्निः साध्याभावो वह्न्यभावस्तद्व्यापकीभूताभावो धूमाभावः, जलह्रदे वह्निर्नास्ति धूमोऽपि नास्ति तत्प्रतियोगित्वं धूमस्येति।

## व्याप्ति-द्वैविध्येऽनुमान-त्रैविध्यम्।

केवलान्वयि, केवलव्यतिरेकि, अन्वयव्यतिरेकि चेति त्रिविधमनुमानम्। केवलान्वयि केवलान्वयि-व्याप्तिकमसद्विपक्षम्। यथा—घटोऽभिधेयः प्रमेयत्वात् पटवत्, यत्र यत्राभिधेयत्वं तत्र तत्र प्रमेयत्वमित्यन्वयव्याप्तिरेवास्ति, सर्वस्यैवाभिधेयत्वात्प्रमेयत्वाच्च नास्ति व्यतिरेकव्याप्तिः, अत एव नास्ति विपक्षः। केवलव्यतिरेकि केवलव्यतिरेक-व्याप्तिकमसत्सपक्षम्, यथा—पृथिवी इतरेभ्यो भिद्यते गन्धवत्वादित्यत्र यदितरेभ्यो न भिद्यते तन्न गन्धवत्, यथा जलमिति व्यतिरेकव्याप्तिरेवास्ति। यद् गन्धवत्तदितरभेदवदित्यन्वयव्याप्तिर्नास्ति सपक्षाभावाद् दृष्टान्तो नास्ति यतः। गन्धवत्पृथिवीमात्रं हि पक्षः। अन्वय-व्यतिरेकोभय-व्याप्तिकं सत्सपक्ष-विपक्षम् अन्वयव्यतिरेकि, यथा—'पर्वतो वह्निमान् धूमात्' अत्र हि यत्र धूमस्तत्र वह्निर्महानसवदित्यन्वयः, दृष्टान्तो महानसः सपक्षोऽस्ति। यत्र वह्निर्नास्ति तत्र धूमो नास्ति जलह्रदवदिति व्यतिरेकस्तद्दृष्टान्तो जलह्रदो विपक्षोऽप्यस्ति।

## कः सपक्षो विपक्षो वा।

सन्दिग्ध-साध्यवान् पक्षः, पर्वतो वह्निमानित्यत्र यथा पर्वतस्तत्र हि सन्दिग्ध-साध्य वह्निः। निश्चित-साध्यवान् सपक्षो यथा तत्रैव महानसः, साध्यं वह्निर्महानसे निश्चितः। अयं

सपक्षोऽन्वय-व्याप्तौ भवति दृष्टान्तः। निश्चित-साध्याभाववान् विपक्षः तत्रैव जलह्रदो यथा। जलह्रदे हि साध्यस्य वह्नेरभावो निश्चितः। सोऽयं विपक्षो व्यतिरेकव्याप्तौ दृष्टान्तीभवति।

## सद्धेतुरनुमापको नासद्धेतुः।

ननु हेतुः सद्धेतुरदुष्टो हेतुः, स पक्षानुमिति-जनकः, तथा चाचक्षते—

"अनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्॥"[1]

असद्धेतुर्दुष्टो हेतुश्च नानुमिति-जनकः, अयमेव हेत्वाभास इत्युच्यते। हेतुवदाभासते यतो न च हेतुर्भवति। दुष्टो हि सः। ते दोषाश्च व्यभिचारो विरोधः सत्प्रतिपक्षता असिद्धिर्बाधश्चेति पञ्च, तद्विशिष्टा हेतवो हेत्वाभासाश्चापि पञ्चैव।

१. प्रतिपिपादयिषित धर्मविशिष्टो धर्मी पक्षोऽनुमेयः, तेन सम्बद्ध तत्र वर्तमानमिति यावत्, पक्षसत्त्व-विशिष्टमिति भावः। तदन्विते= निश्चित-साध्यवति सपक्षे प्रसिद्धं, सपक्षसत्त्व-विशिष्टं चेत्यर्थः। तदभावे=साध्याभावे निश्चित-साध्याभाववति विपक्षे नास्त्येव, विपक्षाऽसत्त्व-विशिष्टमिति भावः। तल्लिङ्गम्=पूर्वोक्तलक्षणं पक्षसत्त्व-सपक्षसत्त्व-विपक्षाऽसत्त्व-विशिष्टं लिङ्गम् अनुमापकं भवति। (प्रतिपिपादयिषितो धर्मः साध्यम्, सोऽस्याऽस्तीति धर्मी पक्षः।) (अनुमापकम्=अनुमिति-जनकम्, तदेव सद्धेतुः)।

सव्यभिचारो विरुद्धः सत्प्रतिपक्षोऽसिद्धो बाधितश्चेति हेत्वाभासाः ।

यद्विषयकत्वेन ज्ञानस्यानुमिति-प्रतिबन्धकत्वं तत्त्वं हेत्वाभासत्वम्। तत्र सव्यभिचारोऽनैकान्तिकः, ऐकान्तिकः सहचारी स न भवतीत्यनैकान्तिको व्यभिचारी हेतुः सव्यभिचारः, स त्रिविधः—साधारणोऽसाधारणोऽनुपसंहारी चेति । सपक्षविपक्षोभयवृत्तिर्हेतुः साधारणो यथा—पर्वतो वह्निमान् प्रमेयत्वात् इति। प्रमेयत्वं हि सपक्षे महानसादौ विपक्षे ह्रदादौ च वृत्ति। सपक्षविपक्षोभयव्यावृत्तो हेतुरसाधारणः, शब्दो नित्यः शब्दत्वादित्यत्र शब्दत्वं हेतुः केवलं शब्दरूप-पक्षवृत्तिः, सपक्षेभ्यो नित्येभ्यः परमाण्वादिभ्यो विपक्षेभ्योऽनित्येभ्यो घटपटादिभ्यश्च व्यावृत्तस्ततोऽसाधारणः। अन्वय-व्यतिरेक-दृष्टान्तरहितोऽनुपसंहारी, यथा सर्वमनित्यं प्रमेयत्वात्, अत्र सर्वं पक्षः। नाहित कश्चिद्सपक्षो विपक्षो वा यो हि अन्वयेन व्यतिरेकेण वा दृष्टान्तः स्यात्।

साध्याभाव-व्याप्तो हेतुर्विरुद्धः, अर्थात् साध्यवति यो नैव तिष्ठति स विरुद्धो यथा—शब्दो नित्यः कार्यत्वात्। अत्र कार्यत्वं हेतुः साध्याभावेनाऽनित्यत्वेन व्याप्तः, सर्वं कार्यमनित्यमिति। साध्यवति नित्ये तु न क्वापि कार्यत्वमिति विरुद्धो हेतुः।

---

१. यद्विषयकं ज्ञानम् अनुमिति-प्रतिबन्धकं भवति स दोषो हेत्वाभासत्वमित्यर्थः। यथा व्यभिचारविषयकं ज्ञानम् अनुमितिप्रतिबन्धकमिति व्यभिचारो दोषस्तद्वांश्च हेतुर्हेत्वाभासः सव्यभिचारः। एवमन्यत्रापि।

साध्याभाव-साधकं हेत्वन्तरं यस्य विद्यते स सत्प्रतिपक्षः। यत्रैको हेतुर्यत् साध्यं साधयितुं प्रवृत्तः, हेत्वन्तरं च तत्साध्याभावं साधयितुं प्रवर्तते तत्र प्रथमो हेतुः सत्प्रतिपक्षः, अस्ति तस्य प्रतिपक्ष इति। शब्दो नित्यः श्रावणत्वात् शब्दत्ववत्। शब्दोऽनित्यः कार्यत्वाद् घटवत्। अत्र श्रावणत्वं हेतुर्नित्यत्वं साधयितुं प्रवृत्तः, हेत्वन्तरं च कार्यत्वं तदभावमनित्यत्वं साधयतीति सत्प्रतिपक्षः श्रावणत्वं हेतुः। अयमेव प्रकरणसम इत्यभिधीयते। स एव साध्याभाव-साधको हेतुर्विरुद्धः। हेत्वन्तरं साध्याभावसाधकं सत्प्रतिपक्ष इति स्पष्टस्तयोर्भेदः।

असिद्धस्त्रिधा—आश्रयासिद्धः, स्वरूपासिद्धो, व्याप्यत्वाऽसिद्धश्च। आश्रयासिद्धः—यत्राश्रयस्य पक्षस्यैवाऽसिद्धिः, यथा गगनारविन्दं सुरभि अरविन्दत्वात्सरोजारविन्दवत्, अत्राश्रयो गगनारविन्दं तच्च नास्त्येव। स्वरूपासिद्धः—यत्र हेतोः स्वरूपस्यैवाऽसिद्धिः, यथा शब्दो गुणश्चाक्षुषत्वाद्रूपवत्, अत्र हेतोः स्वरूपस्य चाक्षुषत्वस्याऽसिद्धिः शब्दो हि श्रावणो न चाक्षुषः। व्याप्यत्वासिद्धः-सोपाधिको हेतुर्व्याप्यत्वासिद्धः, यथा पर्वतो धूमवान् वह्निमत्त्वात्, अत्र आर्द्रेन्धनसंयोग उपाधिस्तद्वत्त्वात् हेतुर्व्याप्यत्वासिद्धः। अथ कोऽयमुपाधि —

साध्य-व्यापकत्वे सति साधनाव्यापकत्वमुपाधिः।

साध्यव्यापकत्वं नाम यत्र साध्यं तत्र वृत्तित्वम्, साधनाव्यापकत्वं च यत्र हेतुस्तत्रावृत्तित्वम्। यथा वह्निना धूमवत्त्वे साध्ये आर्द्रेन्धनसंयोग उपाधिः, यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकता, यत्र वह्निस्तत्र (अयोगोलके) आर्द्रेन्धनसंयोगो

१. सत्प्रतिपक्ष एव न्यायदर्शने 'प्रकरणसमः' इत्यभिधीयते। अनिर्णीतौ पक्षप्रतिपक्षौ प्रकरणम्, तेन समः प्रकरणसम इति।

नास्तीति साधनाऽव्यापकता, ततश्चार्द्रेन्धनसंयोगो वह्निमत्त्वे उपाधिः ।

प्रमाणान्तर-निश्चित-साध्याभावको हेतुर्बाधितः । यस्य हेतोः साध्याभावः प्रमाणान्तरेण निश्चितः स बाधित इत्यर्थः । यथा वह्निरनुष्णो द्रव्यत्वात् पटवत् इत्यत्र साध्यमनुष्णत्वं तदभाव उष्णत्वं स्पार्शन-प्रत्यक्षेण वह्नौ सिद्ध इति द्रव्यत्वं बाधितो हेतुः । इत्यनुमानसङ्ग्रहः ।

## उपमितिः प्रमा तृतीया ।

तृतीया प्रमा उपमितिः । सादृश्येन संज्ञा-संज्ञि-सम्बन्ध-ज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानमुपमानप्रमाणम् । यथा गौरिव गवय इति कुतश्चिदारण्यकाच्छ्रुत्वा गवा समानमर्थं वने उपलभमानो नागरिकः श्रुतपूर्वं वाक्यं स्मरन् गवयशब्दोऽस्य संज्ञेति संज्ञा-संज्ञि-सम्बन्धं प्रतिपद्यते । संज्ञा नामधेयपदं संज्ञि पदार्थस्तयोः सम्बन्धो वाच्य-वाचकभावः शक्तिरिति सादृश्येन पदपदार्थ-सम्बन्धज्ञानमुपमितिः (फलम्) । अतिदेश-वाक्यार्थज्ञानमुपमानम् (करणम्) । अतिदेश-वाक्यार्थस्मरणं च व्यापार इति विवेकः । एवं यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा माषपर्णीत्युपमाने प्रयुक्ते सादृश्येन संज्ञा-संज्ञि-सम्बन्धं प्रतिपद्यमानस्तामोषधीं भैषज्यायाहरतीति ।

इत्युपमितिः ।

## शाब्दी प्रमा चतुर्थी ।

आप्तवाक्याज्जायमानं वाक्यार्थज्ञानं शाब्दी प्रमा । अयमेव आगम इत्युच्यते । पदार्थस्य यथार्थरूपेण साक्षात्करणम् आप्ति-

१. वह्निमत्वादिति क्वचित् ।

स्तथा प्रवर्तते यः स आप्तो यथार्थवक्ता, स च यथार्थरूपेण दृष्ट्वाऽनुमीय वा परत्र स्वबोध सङ्क्रान्तये वाक्यं प्रयुङ्क्ते, ततो जायमानं वाक्यार्थज्ञानं भवति शाब्दी प्रमा, शाब्दबोधोऽपि स एवाभिधीयते। यो न यथार्थरूपेण दृष्टानुमितार्थस्तस्यागमः प्लवते[1]। शाब्दबोधे पदज्ञानं करणं कृत्वा पदजन्य-पदार्थस्मरणं व्यापारः। वृत्तिश्च शक्तिर्लक्षणा चेति द्विविधा। तत्र शक्तिः पदेन पदार्थस्य सम्बन्धो वाच्य-वाचकभावरूपः। स एव सङ्केत इत्युच्यते। अयमस्य वाच्योऽर्थः वाऽस्य वाचक इति शक्तिग्रहश्च भवति व्याकरणादिभ्यस्तदुच्यते—

"व्याकरणादुपमानाद कोशाप्तवाक्यतः,
व्यवहाराद् वाक्यशेषाद् विवृतेः पद-सन्निधेः।
ईत्यष्टकाद् भवेदस्माच्छक्तिज्ञानं यथार्थतः॥"

√भू सत्तायां, √गम्लृ गतौ, √अद् भक्षणे, कर्तरि कृत्, कर्मण्यण्, गर्गादिभ्यो यञ् इत्येव धातु-प्रकृति-प्रत्ययादीनां शक्तिग्रहो व्याकरणाद् भवति। किन्तु वैयाकरणैराख्यातस्य (तिङ्प्रत्ययान्तस्य) कर्तरि शक्तिरुच्यते—'लः कर्मणि च भावे चाकर्मकेभ्यः' इति। तथा च चैत्रः पचतीत्यत्र पचतीत्यस्य पाककर्ताऽर्थः, चैत्रस्य तेन सहाऽभेदान्वयः, पाककर्ताभिन्नश्चैत्र इति शाब्दबोधः। नैयायिकैरिदं न गृह्यते। गौरवं च स्पष्टम्—कर्तरि शक्तौ शक्यः कर्ता शक्यतावच्छेदकं कर्तृनिष्ठो धर्मः कर्तृत्वम्, अर्थात् कृतिरेव स्यात्। सा च प्रतिकर्तृ भिन्नेति शक्यतावच्छेदकानां नानात्वमापतितम्। अतश्च लाघवादाख्यातस्य कृतावेव शक्तिः स्वीकार्या, ततश्च शक्या कृतिः शक्यतावच्छेदकं कृतित्वं तच्चैकमिति स्पष्टं लाघवम्। कृतिश्चैवमादौ प्रकारीभविष्यति, चैत्रः पचतीत्यस्य पाकानुकूलकृतिमांश्चैत्र इति शाब्दबोधो

१. प्लवते—अप्रमाणं भवति।

उन्नीयते । अथ कृतौ शक्तिस्वीकारे कर्तुरनुक्तत्वात् तत्र तृतीयापत्तिरिति चेन्न कर्तृगतसङ्ख्याया अनुक्तत्वं तत्र विवक्षितम् । अभिधीयते चात्राख्यातेन कर्तृगता सङ्ख्या ततो नात्र कर्ताऽनुक्तस्ततो न तृतीयापत्तिः ।

कोशाच्छक्ति-ग्रहो यथा—'अमरा निर्जरा देवाः' 'ईश्वरः शर्व ईशानः' 'प्रचेता वरुणः पाशी' इत्येवं समानार्थक-पदानां सङ्ग्रहेण शक्ति-ग्रहः कोशेन प्रतिपाद्यते । अयमपि सति दोषे क्वचित्त्याज्यः । "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इति कोशेन शुक्लादि-पदानां शुक्लादिरूपे तद्वद्रूपवति च प्रतिपादिता शक्तिः । एकस्य बहुषु शक्तिरिति गौरवम् । ततः शुक्लादिरूपे एव शक्तिः । तद्वति तु लक्षणा, शुक्लः पटः, नीला शाटी, शुक्लरूपवान् पटः, नीलरूपवती शाटीत्यर्थः ।

आप्त-वाक्याच्च शक्ति-ग्रहः—अयमश्व-पदवाच्य इत्याप्त-वाक्यादेवाश्व-पद-शक्तिर्गृह्यते ।

मुख्यतो व्यवहारात्सर्वप्रथम शक्ति-ग्रहो जायते, तद्यथा—उत्तमवृद्ध आदिशति—गामानय, मध्यमवृद्धो गामानयति । पार्श्वस्थो बालः प्रतिपद्यते—गामानयेत्यस्य गवानयने शक्तिरिति । अखण्ड-वाक्यस्याखण्ड-वाक्यार्थे प्रथममनन्तरं च गां बधान अश्वमानयेत्यादिके मध्यमेन तदाचरिते चावापोद्वापाभ्यां गोशब्दस्य गलकम्बलवज्जीव-विशेषे (गवि) आनय-शब्दस्य चानयने शक्तिमवधारयति ।

वाक्य-शेषादपि भवति शक्ति-ग्रहो यथा—'यवमयश्चरुर्भवती'ति वाक्ये कोऽयं यव इति सन्देहः । वाक्य-शेषश्चास्ति—"अथान्या ओषधयो म्लायन्ते अथैते मोदमानास्तिष्ठन्ति ।"

१. आवापः कस्यचित्पदस्य संग्रहः, उद्वापः कस्यचित्पदस्य त्यागः, ताभ्याम् इत्यर्थः ।

तेन इतरौषधीनां म्लानकाले वसन्तर्तौ मोदमानतया वर्तमाने दीर्घ-शूक-विशिष्टे धान्य-विशेषे यव-पदस्य गृह्यते शक्तिः।

एवं विवरणादपि। विवरणं नाम समानार्थक-पदान्तरेण तदर्थकथनम्। घटोऽस्तीत्येतस्य विवरणं कलशोऽस्तीति। तेन घट-पदस्य कलशे शक्ति-ग्रहः। पचतीत्यस्य पाकं करोतीत्येवं विवरणादाख्यातस्य कृतौ शक्तिः स्पष्टा।

प्रसिद्ध-पद-सन्निधेश्चापि शक्ति-ग्रहो भवति। "सहकार-तरौ मधुरं पिको रौति" इत्यत्र सहकारपदम् आम्रतरु-वाचि प्रसिद्धं तत्सन्निधेः पिक-पदस्य कोकिले शक्ति-ग्रहः।

## विशिष्टे शक्तिरिति सिद्धान्तः।

अथान्योऽप्यारभ्यते विचारः, पदस्येयं शक्तिर्जातौ व्यक्तौ वा, जातिः पदार्थो व्यक्तिर्वा पदार्थ इति तात्पर्यम्। तत्र जातावेव शक्तिरिति केचित्, जातिरेका व्यक्तयोऽनेका इति जातौ शक्तिस्वीकारे स्पष्टं लाघवम्। व्यक्तौ यदि शक्तिस्तदानन्त्यं व्यभिचारश्च स्यात्, प्रतिव्यक्ति भिन्ना शक्तिरित्यानन्त्यं शक्तीनां प्राप्नोति, एकस्यामेव व्यक्तौ शक्तिरितीतरासु नास्ति शक्तिरिति व्यभिचारः। ततो जातावेव शक्तिः, अथ व्यक्तिभानं कथम्? आक्षेपादिति गृहाण, व्यक्तिं विना जातिभानं नोपपद्यते अतो भवेद् व्यक्त्याक्षेप इति तेषामाशयः।

तदेतन्नोपपद्यते,—आक्षेपलभ्यं न शाब्दान्वये निविशति। तत् कथं शक्त्यभावे व्यक्तेरन्वयः शाब्दबोधे, नापि लक्षणया, विनैवाऽनुपपत्ति-प्रतिसन्धानं व्यक्तेर्बोधात्। न चात्राऽपि अनुपप-

१. व्यक्तौ शक्त्यभावे इत्यर्थः।

२. लक्षणा हि तात्पर्यानुपपत्तिम् अन्वयानुपपत्तिं च प्रतिसन्धायैव प्रवर्तते।

तिप्रतिसन्धानं विना लक्षणा दृष्टा। किन्तु गोत्व-जातौ शक्ति-स्वीकारे शक्यं गोत्वं शक्यतावच्छेदकं च गोत्वत्वं स्यात्, तच्च गवेतरासमवेतत्वे सति सकल-गोसमवेतत्वमिति शक्यताऽवच्छेदके सकल-व्यक्त्यनुप्रवेशाद् गौरवमापतेत्। ततो व्यक्तावेव शक्तिरिति साधु। तथा च न दोषो व्यक्ति-बोधे कश्चित्, नाऽपि गौरवम्। न चाऽऽनन्त्य-व्यभिचारश्च स्यादित्युक्तम्। सकलासु व्यक्तिषु एकस्या एव शक्तेः स्वीकाराददोषः। न चाऽननुगमः[1], गोत्वादि-जातिरेवाऽनुगमिका स्यात्। गोत्व-जात्यनुगत-गोव्यक्तौ शक्तिरिति जाति-विशिष्टा व्यक्तिरेव शक्या न केवला जातिर्नाऽपि केवला व्यक्तिरिति सिद्धान्तः।

## शक्तं पदं चतुर्विधम्।

शक्ति-विषयोऽर्थः शक्यः, पदस्य सा शक्तिरिति पदं शक्तम्। शक्तौ निरूप्योऽर्थः, निरूपकं च पदम्। शक्योऽर्थः पदं च शक्तम्। सेयं शक्तिर्द्विविधा अवयव-शक्तिः समुदाय-शक्तिश्च, प्रकृति-प्रत्ययाद्यवयवानाश्रित्याऽर्थबोधिका शक्तिरवयवशक्तिः। समुदायस्य परम्परा-प्रयोगमाश्रित्याऽर्थबोधिका शक्तिः समुदाय-शक्तिः, इयमेव रूढिरित्याख्यायते। शक्तिद्वैविध्ये शक्तं पदं चतुर्विधम्—यौगिकं, रूढं, योगरूढं, यौगिकरूढं चेति। तत्राऽवयवशक्तिमात्रेणार्थबोधकं पदं यौगिकम्—पाचकः पाठको वा यथा, अत्र हि केवलया अवयवशक्त्यैव पाकानुकूलकृतिमान् पाठानुकूलकृतिमांश्च बुध्यते।

यत्र केवलया समुदाय-शक्त्यैवाऽर्थबोधस्तद्रूढं गौमण्डलं च

१ अनन्तानां व्यक्तीनामेकरूपेणोपस्थापकत्वम् अननुगमः। तथोक्तम्—"गोत्वादिनैवानुगमः" इति। गोत्वजात्यनुगताः सकला गोव्यक्तय इति तात्पर्यम्।

यथा, गोपदं समुदायरूपेण परम्परया गवि प्रयुज्यमानं तमर्थं बोधयति, नाऽवयवशक्त्या तस्य तत्र प्रयोगः। एवं मण्डलपदं समुदाय-रूपेण परम्परया सूर्यादिबोधके कुण्डलाकारे परिधौ शक्तमिति रूढम्।

यत्र तु अवयव-शक्तिविषये समुदायशक्तिरपि स्यात्, तद् योगरूढम्—पङ्कजपदं यथा, अत्र पङ्कजपदमवयवशक्त्या पङ्काज्जातत्व-रूपमर्थं बोधयति, समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति तेन पङ्काज्जातं पद्ममेव पङ्कजमुच्यते न तथापि भवत् तृणादिकं पङ्कजमुच्यते।

यत्र चैकमेव पदम् अवयवशक्त्या समुदायशक्त्या च स्वातन्त्र्येण पृथक्पृथगेवार्थं बोधयति तद् यौगिकरूढम्—उद्भित्पदं[1] यथा, उद्भित्पदं हि अवयवशक्त्या तरु-गुल्मादौ शक्तं तद् बोधयति। समुदायशक्त्या च याग-विशेषम्[2]।

द्वितीया वृत्तिर्लक्षणा शक्यसम्बन्धः।

प्रथमा वृत्तिः शक्तिर्निरूपिता, द्वितीया वृत्तिर्लक्षणा च शक्य-सम्बन्धरूपा। शक्यः शक्तिविषयोऽर्थस्तेन यः सम्बन्धः सैव लक्षणा। सम्बन्धश्च सामीप्य-सादृश्यादिरूपः।

तात्पर्यस्याऽन्वयस्य वाऽनुपपत्तिर्लक्षणा बीजम्।

पदार्थानामन्वयस्य वक्तुस्तात्पर्यस्य चानुपपत्तिर्यत्र प्रति-सन्धीयते तत्र भवति लक्षणा, यथा "गङ्गायां घोष" इत्यत्र

१. उद्भिनत्ति उद्भित्।

२. 'उद्भिदा यजेत पशुकामः' इति श्रुतौ उद्भिन्नामकं यागविशेषं बोधयतीत्यर्थः।

गङ्गापदशक्यः=पदार्थोऽस्ति गभीरत्व-खातावच्छिन्नो जल-प्रवाह-स्तत्र घोषपदशक्यार्थस्य=पदार्थस्याभीर-पल्लीरूपस्याधाराधेय-भावेन ह्यन्वयो नोपपद्यते, जलप्रवाहे घोषो न सम्भवति यतः। सम्भवेऽस्य प्रवहेत्, ततोऽन्वयानुपपत्तिः, गङ्गापदस्य प्रवाहार्थे वक्तुस्तात्पर्यं नास्तीति तात्पर्यानुपपत्तिश्चाऽस्तीति—गङ्गापदस्य स्वशक्यार्थ-सम्बन्धेन सामीप्यरूपेण पूर्वमनुभूतेन सम्प्रति च स्मृतिविषयीभूतेन तीरस्य बोधः, तीरवृत्तिर्घोष इति। स्मर्य-माणो गङ्गा-पद-शक्यार्थ-सम्बन्धः सामीप्यरूपो लक्षणा। तथा च शाब्दबोधः—गङ्गातीर-निष्ठाधारता-निरूपिताऽऽधेयतावान् घोष इति। इयं जहत्स्वार्था। सर्वथा शक्यार्थ-परित्यागात्।

न केवलमन्वयानुपपत्ति र्लक्षणा-बीजम्। किन्तु तात्पर्यानु-पपत्त्यापि लक्षणा दृश्यते यतः। अन्यथा काकेभ्यो दधि रक्ष्यता-मित्यत्र लक्षणा न स्यात्। नास्त्यत्राऽन्वयस्याऽनुपपत्तिः, काकेभ्योऽपि दधि रक्षणीयमस्त्येव, भवति चात्र दध्युपघातकमात्रे (बिडाल-कुक्कुरादौ) लक्षणा काकपदस्य, सर्वतो दधिरक्षा ह्यत्र वक्तुस्तात्पर्य-विषय इति तात्पर्यानुपपत्तेरिह लक्षणा। शक्यदनिष्टकारकत्व-सम्बन्ध-रूपा सेयं। काकपद-शक्यार्थ-स्याऽपरित्यागादजहत्स्वार्था।

उभयत्रैव शुद्धा सादृश्येतर-सम्बन्ध रूपा। सादृश्य-सम्बन्ध-रूपा तु गौणी, यथा सिंहो माणवकः, सिंहपदं स्वशक्यार्थ-

१. जहातीति जहत्, (नपुंसकबहुवचने जहति) जहति स्वानि (पदानि) यं सोऽर्थो जहत्स्वः, जहत्स्वः अर्थो यस्या सा जहत्स्वार्था। शक्यार्थसम्ब-न्धि-मात्रबोधजनिकेत्यर्थः।

२ न जहाति=अजहत् (न. त्रि. बहु. अजहति) अजहति स्वानि (पदानि) यं सोऽर्थोऽजहत्स्वः। तादृशोऽर्थो यस्या सा अजहत्स्वार्था। शक्यार्थ-तदर्थोभय-विषयक बोधजनिकेत्यर्थः।

सम्बन्धेन सादृश्याख्येन लक्षणारूपेण स्वसदृशं बोधयति तस्य बालेन सहाऽभेदान्वयः सिंहसदृशो बाल इति शाब्दबोधः।

## वाक्यं पद-समुच्चयः।

सुबन्तं तिङन्तं च पदमिति प्रसिद्धम्। पदानां समुच्चयो वाक्यम्—गामानय, घटं नय, हरिं भजेत्यादिकं यथा। सुप्तिङन्तचयो वाक्यमित्यन्यत्र। वाक्यार्थ-ज्ञानं शाब्दबोधः, तत्र वृत्त्या पदजन्य-पदार्थोपस्थिति द्वारा पदज्ञानस्य कारणता पूर्वमुक्ता, सहकारितयाऽन्येषामपि कारणत्वम्, यथा च—

## आसत्ति-योग्यताकाङ्क्षा-तात्पर्यज्ञानानि।

आसत्तिज्ञानं, योग्यताज्ञानम्, आकाङ्क्षाज्ञानं, तात्पर्यज्ञानं चापि शाब्दबोधे कारणमिति। तत्रासत्तिः, पदानां सन्निधानम्—यत्पदार्थेन यत्पदार्थस्यान्वयोऽपेक्षितस्तयोरव्यवधानोपस्थितिरित्यर्थः। तेन गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादावासत्त्यभावान्न शाब्दबोधः, भुक्तमित्यनेन देवदत्तस्यान्वयोऽपेक्षितः, गिरिरित्यनेनाऽग्निमानित्यस्य, न तयोरस्ति अव्यवधानेनोपस्थितिः। अथवा अविलम्बेनोच्चारणमासत्तिस्तेन इदानीमुच्चारितेन 'देवदत्तः' इति पदस्य दिनान्तरोच्चारितेन 'गच्छती'-ति पदेनाऽऽसत्त्यभावान्न शाब्दबोधः। एकपदार्थेऽपर पदार्थस्य सम्भवत्सम्बन्धो योग्यता, तदभावाद् वह्निना सिञ्चतीत्यत्र न शाब्दबोधः, वह्नौ सेचन-क्रिया-करणत्वरूपः सम्बन्धो न सम्भवति यतः। येन विना यस्याऽन्वयबोधाजनकत्वं तेन तस्याऽऽकाङ्क्षा यथा क्रिया-पदं विना कारक-पदं नाऽन्वयबोधं जनयति, ततः क्रिया-पदेन सह कारक-पदस्याऽऽकाङ्क्षा। तदभावाच्च गौरश्वः पुरुषो हस्तीत्यादौ न शाब्दबोधः। तात्पर्यं वक्तुरिच्छा,

तद्ज्ञानमपि शाब्दबोधे कारणम्, अन्यथा[1] सैन्धवमानयेत्यत्र यात्रा-प्रसङ्गेऽश्वस्य; भोजन-प्रसङ्गे च लवणस्य बोधो न स्यात्। न चैवंविध-स्थले तात्पर्य-ग्राहक-प्रकरणादीनामेव किन्न हेतुता? अननुगमात्। तात्पर्यज्ञान-जनकत्वेनाऽनुगम इति चेत्, तदपेक्षया तात्पर्यज्ञानस्यैव हेतुत्वे लाघवम्।

इति शब्दखण्डः।

---

## अनुकूल-वेदनीयं सुखं, प्रतिकूल-वेदनीयं दुःखम्।

सर्वेषामनुकूलमिति वेद्यं सुखम्। न तत्कस्याऽपि प्रतिकूलमिति वेद्यम्। एवं सर्वेषां प्रतिकूलमिति वेद्यं दुःखम्। न तत्कस्याऽप्यनुकूलमिति वेद्यम्। सर्वो ह्यनुकूलं कामयतेऽत एव सुखं सर्वेषां काम्यम्। प्रतिकूलं च सर्वो द्वेष्टि अत एव दुःखं सर्वेषां द्वेष्यम्। सुख-दुःखयोर्धर्मस्याऽधर्मस्य च यथाक्रमं कारणताऽसाधारण्येन। इष्टमनिष्टं चापि क्रमशः सुखे दुःखे च साधारण-कारणम्। इष्ट-कारणकं सुखमनिष्ट-कारणकं च दुःखम्। इष्टं-स्रक्-चन्दन-वनितादि। अनिष्टं चाऽहि-कण्टक-रोगादिकम्। न चैते सह भवतः, सुख-काले न दुःखं दुःख-काले च न सुखम्। आत्मनि समवायेन जन्यते, अत आत्मसमवायि-कारणकमुभयम्। स्वात्मनि मानस-प्रत्यक्ष-वेद्यमुभयम्, अहं सुखी दुःखी चाऽहमिति। परत्र च मुख-प्रसाद-मालिन्यादिना सुखं दुःखं चाऽनुमीयते।

## इष्टेषु रागः कामो वा इच्छा।

कामो राग इच्छा इत्यनर्थान्तरम्। इदं मे स्यादिति सुखे तत्साधनेषु वा भवति रागः, दुःखाऽभावे च। सुखे सुख-ज्ञाना-

---

१. यदि तात्पर्यज्ञानं शाब्दबोधे कारणं न स्यात्।

सदुपाये तदुपाय ज्ञानाच्च जायते इच्छा, दुःखाऽभावे तदज्ञानादेव। कर्तुमिच्छा चिकीर्षा, पाको मत्कृत्या साध्यो भवेदित्यादिरूपा।

## अनिष्टेषु क्रोधो द्वेषः।

इदं मे मा भूदिति दुःखे दुःखसाधनेषु वा क्रोधो द्वेषः, क्रोधो द्वेष इति पर्यायौ। द्विष्ट-साधनता बुद्धिरनिष्ट-साधनताज्ञानं च द्वेषस्य हेतुः। बलवदिष्टसाधनताज्ञानं च प्रतिबन्धकम्। तत एव नान्तरीयक[1]-दुःख-जनकेऽपि बलवदिष्ट-साधने पाकादौ न द्वेषः।

## कृतिः प्रयत्नः, स त्रिधा।

प्रवृत्तिर्निवृत्तिर्जीवनयोनिश्चेति। इच्छा-जन्यो गुणः प्रवृत्तिः। यदिच्छति तत्र प्रवर्तते, इष्टसाधनताज्ञानं कृतिसाध्यताज्ञानं च प्रवृत्तौ कारणम्, इदं मदिष्टसाधनमिति ज्ञानमिष्टसाधनताज्ञानम्, इदं मत्कृतिसाध्यमिति ज्ञानं कृतिसाध्यता-ज्ञानम्। चन्द्रमण्डलानयने इष्टसाधनेऽपि कृतिसाध्यता-ज्ञानाभावान्न प्रवृत्तिः। इदं मत्कृतिसाध्यमिति ज्ञानं तत्र नास्ति। इष्टसाधनता ज्ञानाभावाच्च न जलताडनादौ बुद्धस्य[2] प्रवृत्तिः। बलवदनिष्टानुबन्धित्व ज्ञानं च प्रवृत्तिप्रतिबन्धकम्, तत एव मधु विष-सम्पृक्तान्नभोजने न प्रवृत्तिः। बलवत्त्वं च इष्टोत्पत्तिनान्तरीयक-दुःखादधिकत्वम्। तेन इष्टोत्पत्ति-नान्तरीयक दुःखजनके

१. नान्तरीयकम्—अवश्यभावि। यदन्तरा (यद्विना) इष्यमाणं सुखं नैवोत्पद्यते। पाके कर्तव्ये तदायासादिदुःखं यथा।

२ बुद्धिमतः।

अपि पाकादौ[1] भवति प्रवृत्तिः। द्वेष-जन्यो गुणो निवृत्तिः, यद् द्वेष्टि ततो निवर्तते। जीवनादृष्ट-जन्यो गुणो जीवनयोनिः प्राणसञ्चार-हेतुः, येन शरीरे प्राणः सञ्चरति तत्र उच्यते जीवतीति।

## पुण्य-कर्म-जन्यो धर्मः, पाप-कर्म-जन्योऽधर्मः।

शास्त्रविहितं कर्म पुण्यं यागादि सत्यभाषणादि वा, तज्जन्यमदृष्टं धर्मो येन कालान्तरे स्वर्गादि-सुखप्राप्तिः, अन्यथा[2] कर्मणः स्वदैव नाशात् फलभूता स्वर्गादि-सुख-प्राप्तिः कथं स्यात्। एवं शास्त्र-निषिद्धं कर्म पापं चौर्यादि-हिंसादि वा, तज्जन्यमदृष्टमधर्मः, येन कालान्तरे नरकादि-दुःखप्राप्तिः। अमी आत्म-वृत्ती यथा कालं विपच्यमानौ स्वफलभूतं सुखं दुःखं वा प्रसुवाते पुण्य-पापकर्मणोर्व्यापारभूतौ।

## गुणविशेषः संस्कारः।

अयं सामान्यगुणः, आत्मवृत्तिर्विशेषगुणश्चेति विशेषोऽस्य गुणान्तरेभ्यः। सोऽयं त्रिविधः वेगः, स्थितिस्थापको भावना चेति। वेगः प्रसिद्धः पृथिव्यादि-चतुष्टयमनोवृत्तिः। अयं कर्मजन्यो वेगजन्यश्च। शरीरादौ नोदनजनितेन[3] कर्मणा जन्यते वेगः, स कर्मजो वेगः। वेगवता कपालेन घटे जन्यते वेगः, स वेगजो वेगः। अन्यथाकृतस्य पुनस्तदवस्थापादकः संस्कारः स्थितिस्थापकः, कटादिपृथिवीवृत्तिः वृक्षशाखादिवृत्तिश्च।

---

१. पाके हि इष्टोत्पत्तिनान्तरीयकदुःखादधिकं दुःखं न जायते। मधु-विषसम्पृक्तान्नभोजने तु मरणदुःखं बलवद्दुःखम्।

२. यदि धर्माख्यमदृष्टं न स्यात्।

३. नोदनं संयोगभेदः पूर्वमुक्तः, तज्जनितेन कर्मणेत्यर्थः।

## अनुभव-जन्यः स्मृति-हेतुः संस्कारो भावना।

उपेक्षानात्मकोऽनुभवः संस्कारं भावनाख्यं जनयति। उपेक्षात्मकश्चाऽनुभवो न संस्कारं जनयति नाऽपि स्मृतिम्। सोऽयमतीन्द्रिय आत्मवृत्तिर्विशेषगुणः, स्मृतिः प्रत्यभिज्ञा च तज्जनिता तमिमं भावनासंस्कारमनुमापयति। स्मृतिस्तु, प्रत्यभिज्ञा चेन्द्रियसहकृत-संस्कार-जन्यं ज्ञानं "सोऽयं घट" इति। स्मृतिः प्रत्यभिज्ञा च पूर्वानुभवजन्या, पूर्वानुभवश्च स्मृति-प्रत्यभिज्ञाकालेऽसन् कथं तद्द्वयं जनयेत्, ततस्तद्व्यापारो भावनाख्यः संस्कारः सिद्ध्यति।

## न्यायविद्या तु गौतमी।

प्रमाविषयः प्रमेयं तदेव पदार्थ इत्यभिधीयते, तत्प्रधाना काणादी पदार्थविद्या, यत्र सप्तपदार्था विवेचिताः सम्यक्, गौतमी तु न्यायविद्या=विचारशास्त्रम्। प्रमाणैरर्थपरीक्षणं न्यायो विचार इत्यर्थः। इयं चान्वीक्षिकीत्युच्यते, प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा, तया प्रवर्त्तते इत्यान्वीक्षिकी तर्कप्रधाना न्यायविद्या। यत्र न्यायोपयोगिना प्रकारान्तरेण षोडशधा विभज्य प्रदर्श्यन्ते पदार्थाः।

---

१ उपेक्षा=अनवधानतया ज्ञानम्।

२ तद्व्यापारः=अनुभवव्यापारः। भावनाख्यो हि संस्कारोऽनुभवजन्योऽनुभवजन्य-स्मृति-प्रत्यभिज्ञाजनकश्चेति स्पष्टमनुभवव्यापारत्वं तस्य।

३ कणादमुनि-प्रोक्ता।

४ गौतममुनि-प्रोक्ता।

तथा च श्लोकौ—

प्रमाणं च प्रमेयं च संशयोऽथ प्रयोजनम् ।
दृष्टान्तश्च सिद्धान्तोऽवयवस्तर्क-निर्णयौ ॥
वादो जल्पो वितण्डा च हेत्वाभासश्छलं तथा ।
जातिश्च निग्रहस्थानं षोडशामी पदार्थकाः ॥

प्रमाणैरर्थपरीक्षणं न्याय इति सूत्रे सर्वप्रथमं प्रमाणोपादानम् । तच्चतुर्धा विभक्तं पूर्वत्र विस्तरेण प्रतिपादितमेवेति न पुनः प्रतिपादयामहे ।

प्रमाणेनाधिगन्तव्योऽर्थः प्रमेयम्, तत्प्रतिपादनायेदं सूत्रं प्रवृत्ते—

आत्म-शरीरेन्द्रियार्थ-बुद्धि-मनः-प्रवृत्ति-दोष-प्रेत्य-
भाव-फल-दुःखापवर्गास्तु प्रमेयम् ।

तत्रात्मा सर्वस्य द्रष्टा सर्वस्य भोक्ता सर्वानुभवी पूर्वमेव विस्तरतो निरूपितः परीक्षितश्च । तस्य भोगायतनं शरीरं चेष्टेन्द्रियार्थाश्रयः । चेष्टाश्रयः=ईप्सितं जिहासितं वा विषयं तदुपायानुष्ठानलक्षणा समीहा चेष्टा, सा यत्र प्रवर्तते तच्छरीरम् । इन्द्रियाश्रयः=यस्यानुग्रहेणानुगृहीतानि उपघाते चोपहतानि भवन्तीन्द्रियाणि तदाश्रयः शरीरम् । अर्थाश्रयः=अर्थाः सुखादि-भोगाः शरीरस्थितस्यैवात्मनः सम्भवन्तीत्यर्थाश्रयः शरीरम् ।

घ्राण-रसन-चक्षुस्त्वक्-श्रोत्राणीन्द्रियाणि ।

जिघ्रत्यनेनेति घ्राणं, गन्धं गृह्णाति । रसयत्यनेनेति रसनं, रसं गृह्णाति । चष्टे=पश्यत्यनेनेति चक्षुः, रूपं गृह्णाति । त्वक्=

१. ईप्सितं=प्राप्तुमिष्टं । जिहासितं=हातुमिष्टं । (हानं त्यागः)
२. इन्द्रियमिति शेषः । एवमुत्तरत्रापि ।

स्पर्शनं, त्वक्स्थानत्वात्त्वगुच्यते, स्पृशत्यनेनेति स्पर्शनं, स्पर्शं गृह्णाति । शृणोत्यनेनेति श्रोत्रं, शब्दं गृह्णाति । क्रमश इन्द्रियाणां कारणानि पृथिव्यापस्तेजोवायुराकाशमिति भूतानि ।

गन्ध-रस-रूप-स्पर्श-शब्दास्तदर्थाः ।

तदर्था इन्द्रियार्थाः । पृथिवीगुणो गन्धो घ्राणार्थः । अपां गुणो रसो रसनार्थः । तेजोगुणो रूपं चक्षुरर्थः । वायुगुणः स्पर्शस्त्वगर्थः । आकाशगुणः शब्दः श्रोत्रार्थः । यदिन्द्रियं यद्भूतकारणकं तेन तद्गुणार्थमिति ।

बुद्धिरुपलब्धिर्ज्ञानमिति नार्थान्तरम् ।

उपलब्धिर्ज्ञानमिति च बुद्धिपर्यायौ । सेयं सप्रपञ्चं विवेचिता प्राक् ।

तथा मनः ।

तथान्तरिन्द्रियं मनोऽपि विवेचितं प्रागेव ।

प्रवृत्तिर्वाङ्मनःशरीरारम्भः ।

सोऽयमारम्भश्चेष्टा=क्रिया=प्रवृत्तिरित्युच्यते वाचो मनसः शरीरस्य च । वाचा प्रवर्तमानोऽनृतं परुषमापत्य परनिन्दादिकमाचरति । मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यं च । शरीरेण हिंसा स्तेय-प्रतिषिद्धमैथुनादीनि । सेयमशुभा पापात्मिका प्रवृत्तिरधर्माय । अथ शुभा, वाचा प्रवर्तमानः सत्यं हितं प्रियं स्वाध्याय च । मनसा दयाम् अस्पृहां श्रद्धां च । शरीरेण दानं परित्राणं परिचरणं चेति । सेयं पुण्यात्मिका प्रवृत्तिर्धर्माय ।

१. तदिन्द्रिय, तद्गुणार्थम्=तस्य तस्य भूतस्य पृथिव्यादेर्यो विशेषगुणस्तदर्थं=तद्विषयकमित्यर्थः ।

## प्रवर्तना-लक्षणा दोषाः ।

प्रवर्तना=प्रवर्तकत्वमेव लक्षणं=स्वरूपं येषां ते प्रवर्तनालक्षणा दोषा रागादयः। रागादिभिः प्रयुक्तः पुरुषः प्रवर्तते, आदिशब्देन द्वेषो मोहश्च ग्राह्यः। ततो राग-द्वेष-मोहा दोषा इत्यर्थः। सुखानुशयी रागो, दुःखानुशयी द्वेष इत्युक्तम्। मोहः पुनरविद्या=मिथ्याज्ञानम्। यत्र मोहस्तत्र राग-द्वेषौ। रक्त-द्विष्ट-मूढाश्च कर्मसु प्रवर्तन्ते। रक्तो हि नरकर्म कुरुते, येन सुखं वा दुःखं वा लभते। तथा द्विष्टस्तथा मूढः। ईर्ष्या-लोभादयश्चाऽपि दोषाः।

## पुनरुत्पत्तिः प्रेत्य-भावः ।

उत्पन्नस्य एकत्र शरीरे मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः। प्रेत्य=मृत्वा, भावः=उत्पत्तिः=प्रेत्यभावः। उत्पत्तिश्च शरीरेन्द्रियादिभिरात्मनः सम्बन्धः। प्रायणं=मरणं च शरीरेन्द्रियादिसम्बन्धस्य त्यागः। पूर्वोपात्तान् देहादीन् जहाति तत् प्रैति, अन्यांश्चोपादत्ते तद् भवति। सोऽयं जन्म-मरण-प्रबन्धाभ्यासः प्रेत्यभावः।

## प्रवृत्ति-दोषजनितोऽर्थः फलम् ।

प्रवृत्त्या पुण्य-पापरूपया दोषैश्च रागादिभिर्जनितोऽर्थः सुख-दुःखादि-भोगो मुख्यं फलम्। सोऽयं सुख-दुःखादि-भोगश्च न देहेन्द्रिय-बुद्धि-विषयैर्विना सम्भवतीति देहादिकमपि फलम्।

## बाधना-लक्षणं दुःखम् ।

बाधना=पीडा तत्स्वरूपं दुःखम्। तदनुषङ्गाच्छरीरादिकमपि दुःखमेव।

तदत्यन्त-विमोक्षोऽपवर्गः ।

तस्य = दुःखस्य, अत्यन्तविमोक्षः = अत्यन्त निवृत्तिरपवर्गः । तदिदमभयमजरममृत्युपदमाहुः ।

इति व्याख्यातं प्रमेयम् ।

अथ संशयः

विशेषाऽपेक्षो विमर्शः संशयः ।

विशेषाऽपेक्ष = विशेषनिर्णयाऽपेक्षः, विमर्शः = इदमिदं वा अनिदं वेत्याकारकमनिश्चयात्मकं ज्ञानं संशयः । हेतवस्तस्य चत्वारः, समानानेकधर्मोपलब्धिः प्रथमो यथा—"स्थाणुर्वा पुरुषो वा" इत्यत्र स्थाणुपुरुषयोरारोह-परिणाहादीनामनेकेषां धर्माणामुपलब्ध्या संशयः । विप्रतिपत्तिर्द्वितीयो हेतुः, अणुपरिमाणं मन इति केचित् विभिन्नमन्ये, तदेतद् विरुद्ध-सिद्धान्त-ज्ञानं विप्रतिपत्तिस्ततो जायते संशयः—"मनोऽणुपरिमाणं विभु वा" इति । उपलब्ध्यव्यवस्था तृतीयो हेतुः—यथा सदेवोपलभ्यते इति नियमो नास्ति, असदपि शुक्तौ रजतमुपलभ्यते यतः । तदेतस्मादुपलब्धिनियमाभावाद् जायते संशयो "दृश्यमानमिदं रजतं सद् वाऽसद्वे"ति । अनुपलब्ध्यव्यवस्था चतुर्थः संशयहेतुः—यथा असत एवाऽनुपलब्धिर्भवतीति नियमो नास्ति सतोऽपि पद्मादेः (अतिसामीप्यात्) अनुपलब्धिर्भवति यतः । तदेतस्मादनुपलब्धिनियमाभावाद् भवति संशयः खपुष्पमसन्नोपलभ्यते सद् वेति ।

यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ।

यमर्थं प्राप्तव्यं हातव्यं वा अधिकृत्य = अध्यवसाय निश्चयेतो-

द्विष्येति यावत्; पुरुषः प्रवर्तते तत्प्रयोजनम्। नाऽप्रयोजना प्रवृत्तिः। प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते। प्रवृत्त्यैवाऽस्ति प्रयोजनमिति सिद्ध्यति। तदेतत्[1] सुखं दुःखाभावो वाऽनेकभेद-प्रभेदैः सर्वत्रोपलभ्यते।

लौकिक-परीक्षकाणां यस्मिन्नर्थे बुद्धि-साम्यं स दृष्टान्तः।

लोके=सामान्य-जनसमाजे एव भवा लोक-सामान्यमनतीताः साधारणा जनाः ( नैसर्गिकं वैनयिकं वा बुद्ध्यतिशयमप्राप्ताः ) लौकिकाः। तद्विपरीतास्तर्केण प्रमाणैश्चाऽर्थं ये परीक्षितुमर्हन्ति ते परीक्षकास्तेषामुभयेषां यस्मिन्नर्थे समाना बुद्धिः। यथा यमर्थं लौकिका बुध्यन्ते तथा परीक्षका अपीति सोऽर्थो दृष्टान्तः। वह्निधूमयोः सामानाधिकरण्य-विशिष्ट महानसम् उभाभ्यां समानरूपेण बुध्यते इति सोऽयं भवति दृष्टान्तः।

सिद्धस्य संस्थितिः सिद्धान्तः।

इदमित्थम्भूतम् इत्यनुज्ञायमानमर्थजातं सिद्धम्। आत्मा नित्य एवेति स्वीक्रियमाणमात्मनित्यत्वं सिद्धमित्युच्यते; प्रमाणेन सिद्धत्वात्। तस्य=सिद्धस्य संस्थितिरन्तो व्यवस्था इति यावत्, इत्थं-भावस्य व्यवस्था सिद्धान्त इति तात्पर्यम्। व्यवस्था च नियमः।

सोऽयं त्रिधा तन्त्रसिद्धान्तो,ऽधिकरणसिद्धान्तो,ऽभ्युपगम-सिद्धान्तश्चेति। तन्त्रम्=इतरेतर-सम्बन्धार्थकं शास्त्रं तस्य सिद्धान्तस्तन्त्रसिद्धान्तः, स द्वेधा-सर्वतन्त्रसिद्धान्तः प्रतितन्त्र-सिद्धान्तश्चेत्येवं चतुर्धा सिद्धान्तः।

---

१. तदेतत्=प्रयोजनमित्यर्थः।

सर्वतन्त्राऽविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्र-सिद्धान्तो, यथा घ्राणादीनि इन्द्रियाणि, गन्धादयोऽर्थाः, पृथिव्यादीनि पञ्चभूतानि, प्रमाणैरर्थस्य ग्रहणमिति ।

तन्त्रं तन्त्रं प्रतीति प्रतितन्त्रं; तस्य सिद्धान्तः प्रतितन्त्र-सिद्धान्तः । तत्तच्छास्त्रसिद्धान्त इत्यर्थः । यथा—सप्तपदार्थ-वादो वैशेषिकसिद्धान्तः, षोडशपदार्थवादो न्यायसिद्धान्तः । सोऽयं प्रतितन्त्रसिद्धान्त उच्यते ।

अधिकरणं=शास्त्रैकदेशस्तस्य सिद्धान्तोऽधिकरणसिद्धा-न्तस्तल्लक्षणं च—यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरण-सिद्धान्तः । यथा—प्रपञ्चकर्तृत्वेनेश्वरसिद्धौ तस्यामीश्वरस्य सर्वज्ञत्वादिकं सिद्ध्यतीति ईश्वरसिद्धिः प्रकरणसिद्धान्तः ।

अपरीक्षिताभ्युपगमात् विशेषपरीक्षणमभ्युपगमसिद्धान्तः । यथा—अस्तु द्रव्यं शब्दः स तु नित्योऽथानित्यः, इति द्रव्यस्य सतो नित्यताऽनित्यता वा तद्विशेषः परीक्ष्यते, सोऽयमभ्युप-गमसिद्धान्तः स्व-बुद्ध्यतिशय-चिख्यापयिषया पर-बुद्ध्यव-ज्ञानाय च प्रवर्त्यते ।

अवयवाः पूर्वमुक्ताः परार्थानुमाने, अथेदानीं तर्को व्याख्यायते —

अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ।

सामान्यतो ज्ञाते विशेषतोऽविज्ञातस्वरूपेऽर्थे कारणोपप-त्तितः=हेतूपपादनेनाऽर्थस्य तत्त्वज्ञानार्थमूहः=सम्भावना=तर्कः । यथा—यद्यत्र वह्निर्न स्याद् धूमोऽपि न स्यादिति धूमोपपादनेन वह्निसम्भावनं तर्कः । स च व्यभिचारशङ्काया निवर्तको भवति । "धूमोऽस्तु वह्निर्मास्तु" इति व्यभिचारशङ्का ।

---

१. अपरीक्षितस्य अभ्युपगमात्=स्वीकारात् ।

विमृश्य पक्ष-प्रतिपक्षाभ्यामर्थाऽवधारणं निर्णयः ।

इदमेवं वा अतेवं वेति विमृश्य=संशयमुत्पाद्य; स्वपक्षस्य साधनं पक्षो मण्डनमित्यर्थः, परपक्षस्य खण्डनं प्रतिपक्षस्ताभ्यामर्थस्यावधारणं=निश्चयो निर्णय इत्युच्यते । नाऽयं नियमो विमृश्यैवेति, न चापि पक्ष-प्रतिपक्षाभ्यामेवेति । अर्थाऽवधारणमात्रं तु व्यापक लक्षणम् ।

प्रमाण-तर्कसाधनोपालम्भः सिद्धान्ताऽविरुद्धः पञ्चावयवोपपन्नः पक्ष-प्रतिपक्ष-प्रतिग्रहो वादः ।

एक विषयकौ विरुद्धौ धर्मौ पक्ष-प्रतिपक्षौ, अस्ति आत्मा, नास्ति आत्मेति एकविषयकौ भावाऽभावौ यथा । तयोः परिग्रहोऽभ्युपगम-व्यवस्था वाद । तत्र प्रमाणैस्तर्केण च साधनं=स्वपक्षस्य स्थापनम्, उपालम्भः=परपक्षस्य प्रतिषेधश्च क्रियते । सोऽयं सिद्धान्ताऽविरुद्धः कंचित् सिद्धान्तं स्वीकृत्यैव प्रवृत्तः पञ्चावयवोपपन्नो विचारो वाद इत्युच्यते ।

छल-जाति-निग्रहस्थान-साधनोपालम्भो जल्पः ।

निरुक्तलक्षणो वाद एव छल-जाति-निग्रहस्थान-साधनोपालम्भः सन् जल्प उच्यते । छलादीनि वक्ष्यन्ते । यद्यपि छल-जाति-निग्रहस्थानैर्न कस्यचिदर्थस्य साधनं सम्भवति, तथापि प्रमाणैः स्वपक्षस्य साधने छलादीनामङ्गभावोऽस्त्येव, स्वपक्षसंरक्षणार्थत्वात्तेषाम् । तानि हि प्रयुज्यमानानि परपक्ष-विघातेन स्वपक्षं रक्षन्ति ।

१. स्वीकारनियमः । २. छलादीनि ।

१ **स प्रतिपक्षस्थापना-हीनो वितण्डा ।**

प्रतिपक्ष-स्थापनाहीनो जल्प एव वितण्डा । पूर्वं यौ समानविषयौ विरुद्धधर्मौ पक्ष प्रतिपक्षावुक्तौ, तयोरेकतरं (स्वपक्षत्वेन स्वीकृत्य) वैतण्डिको न स्थापयति; केवलं परपक्षप्रतिषेधेनैव प्रवर्तते । यद्यपि यत् खलु परपक्षप्रतिषेधलक्षणं वाक्यं स एव वैतण्डिकस्य पक्ष इति वक्तुं शक्यते, तथापि साध्यं कंचिदर्थं प्रतिज्ञाय न स्थापयति । तदर्थमेव सूत्रे "स प्रतिपक्ष-स्थापना-हीनो वितण्डा" इत्युच्यते । न पुनः "स प्रतिपक्ष-हीनो वितण्डा" इति ।

हेत्वाभासा विवेचिताः पूर्वमेवाऽनुमाने, संज्ञा-भेदो मृग्यः ।

अथ छलम्

**अर्थविकल्पोपपत्त्या वचन-विघातश्छलम् ।**

अर्थविकल्पस्य=वक्तुरनभिप्रेतस्यार्थान्तरस्योपपादनेन वचनविघातो=वाक्यविरोधप्रदर्शनं छलमित्यर्थः । यथा—नवीनः कम्बलोऽस्येत्यभिप्रायेण नवकम्बलोऽयं देवदत्त इत्युक्ते न सन्ति नव कम्बलाः पार्श्वेऽस्येति (नव-सङ्ख्यानुपपत्ति-प्रदर्शनेन) छलमुच्यते नवकम्बलोऽयमिति ।

**साधर्म्य-वैधर्म्याभ्यां प्रत्यवस्थानं जातिः ।**

साधर्म्येण साध्यसाधने कृते वैधर्म्येण प्रत्यवस्थानं=साध्यानुपपत्तिप्रदर्शनम् जातिः । वैधर्म्येण साध्यसाधने कृते साधर्म्येण प्रत्यवस्थानं च जातिः । यथा—अनित्यः शब्दः कृत-

---

१. वितण्डया प्रवर्तते इति वैतण्डिकः ।

२. न्यायसूत्रे हेत्वाभासानां नामानि—"सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम-कालातीता हेत्वाभासाः" इति । (न्या द १।२।४)

कत्वात्, यत्कृतकं तदनित्यं घटवदित्यत्र यद्यनित्य-घट-साधर्म्याद नित्यः स्याच्छब्दस्तदा अमूर्तत्व-लक्षणादनित्यघट-वैधर्म्यान्नित्यः किन्न स्यादिति जातिः। यथा च अनित्यः शब्दः कृतकत्वात्, यच्च कृतकं तद्याऽनित्यम् आकाशवदित्यत्र यदि नित्याकाश-वैधर्म्यादनित्यः शब्द स्तदाकाशेनामूर्तत्व-साधर्म्यान्नित्यः किन्न स्यादिति जातिः। प्रत्यनीकभावाज्जायमानोऽर्थो जातिरिति।

विप्रतिपत्तिरप्रतिपत्तिश्च निग्रह-स्थानम्।

विप्रतिपत्तिर्विपरीतज्ञानम् अहेतौ हेतुत्व-ज्ञानं यथा। तया प्रवर्तमानः पराजयं प्राप्नोति, सेयं पराजयप्राप्तिः निग्रहस्थानम्। अप्रतिपत्तिश्चाऽऽरम्भविषयेऽप्यनारम्भः परेण स्थापितं न प्रतिषेधति, प्रतिषेधं वा नोद्धरति। तयापि प्रवर्तमानः पराजीयते सापि निग्रहस्थानम्।

अन्तर्भवति सप्तपदार्थ्याम्।

सेयमुद्दिष्टा सामान्यतो लक्षिता च गौतमी षोडशपदार्थी कणादोक्तायामेव सप्तपदार्थ्यामन्तर्भावमर्हतीति न पृथक् परीक्ष्यते। सोऽयमन्तर्भावो दर्श्यते संक्षेपेण—

तत्र प्रत्यक्षप्रमाणं प्रत्यक्षप्रमाकरणमिन्द्रियरूपमेव, चक्षुरादिकं तेजआदि-द्रव्येऽन्तर्भवति, चक्षुस्तेजसि, श्रोत्रमाकाशे, घ्राणं पृथिव्यां, स्पर्शनं वायौ, रसनं जले, मनश्च स्वयं द्रव्यमेव। अनुमानमनुमितिकरणं व्याप्ति ज्ञानरूपम्, उपमानमुपमिति-करणं सादृश्यज्ञानरूपं, शब्दप्रमाणं च पदज्ञानरूपमिति, ज्ञानं च बुद्धिरिति गुणेऽन्तर्भवति।

आत्म-शरीरेन्द्रिय-मनोरूपाणि प्रमेयाणि द्रव्ये। रूपादयोऽर्था गुणे। बुद्धिर्गुणे। प्रवृत्तिः प्रयत्न-भेद इति गुणे। रागादयो दोषा गुणेषु, शरीरसंयोगात्मकः प्रेत्यभावश्चापि गुणे। आत्यन्तिक-दुःख-प्रध्वंसरूपोऽपवर्गस्त्वभावे।

संशयो ज्ञानविशेष एवेति गुणे। प्रवृत्तिहेतुरिच्छाविषयरूपं प्रयोजनं च क्वचिद्द्रव्ये गुणकर्मादौ वा क्वचित्। वादिप्रतिवाद्युभय-निश्चय-विषयरूपोऽर्थो दृष्टान्तो यथायथ द्रव्यादिषु। शास्त्रितार्थनिश्चयरूपः सिद्धान्तो ज्ञानमेवेति गुणे। अवयवाश्च शब्दरूपा इति गुणे।

आपत्त्याख्यो मानसज्ञानविशेषस्तर्को गुण एव। निर्णयोऽपि ज्ञानविशेष एवेति गुणः। वाक्यविशेषरूपा वादजल्पवितण्डाश्च शब्दाख्ये गुणेऽन्तर्भवन्ति। दुष्टहेतवो हेत्वाभासा यथायथं द्रव्यादिषु। छलजात्योश्च वाक्यविशेषत्वेन शब्दरूपतया गुणत्वमेव। निग्रहस्थानं च विप्रतिपत्तिश्चेद् गुणः। अप्रतिपत्तिश्चेदभाव एवेति सिद्धा सप्तपदार्थी, सिद्धं च कणादगौतमीयं पदार्थानुशासनम्।

माघे मासि सिते पक्षे पूर्णिमायां रवौ दिने।
अष्टाधिके द्विसाहस्रे वैक्रमे वत्सरे शुभे॥
ग्रन्थः सम्पूर्णतां यातः परमेशानुकम्पया।
कणाद-गौतमीयाख्यं सत्पदार्थानुशासनम्॥
माता दामोदरी यस्य रामनारायणः पिता।
ग्रन्थं प्रणीतवान् सोऽयं विश्वनाथ-प्रभाकरः॥

इति श्री भारतीय-पञ्जाबप्रान्तस्थ-होश्यारपुर-मण्डलान्तर्गत-जेजों
नगरनिवासि-सुप्रसिद्ध-वशिष्ठकुल-प्रसूत-श्री पण्डित-रामनारायणा-
त्मज-खन्ना नगरस्थ श्रीसरस्वती संस्कृत महाविद्यालया-
चार्य-श्रीमत्पण्डित-विश्वनाथ शास्त्रि-प्रभाकर-
प्रणीतं कणादगौतमीयं पदार्थानुशासनं
सम्पूर्णम्
॥ ॐ तत् सत्॥